KÂVYAMÂLÂ. 34.

# THE PRÂCHÎNA-LEKHA-MÂLÂ

OR

## A COLLECTION OF Ancient Historical Records.

Vol. I.

EDITED BY


MAHOPÂDHYÂYA PANDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKARAM JAVAJI

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGARA" PRESS.

BOMBAY.

1892.

१॥ रूप्यक Rupee.

Price 1½

काव्यमाला ३४.

# PR प्राचीनलेखमाला।

(प्रथमो भागः।)

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना
महामहोपाध्यायपण्डितदुर्गाप्रसादेन,
परबोपाह्वेन पाण्डुरङ्गतनूभुवा
काशीनाथशर्मणा च
संशोधिता।

सा च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता।

१८९२



मूल्यं १॥ रूप्यकः।
Price 1½

# प्राचीनलेखमालाया अनुक्रमणी ।

पृष्ठम् ।




# काव्यमाला

## प्राचीनलेखमाला

भोः काव्यमालानुग्राहका विद्वन्मुकुटमणयः, अस्तु वः संविदितम्, यथा किल बहुविधविद्यापारंगमैराधुनिकैः पण्डितवरैः प्राचीनमहीपतीनां दानपत्राणि प्रशस्तयः शिलालेखाश्च नानादेशेषु भूयसा परिश्रमेण राजाश्रयेण चान्विष्यान्विष्य 'इण्डियन् आण्टिक्वेरी', 'एशियाटिक् रिसर्चिस्', 'आर्कियालॉजिकल् सर्वे', 'रॉयल् एशियाटिक् सोसायटीज् जर्नल्', 'अमेरिकन् ओरिएण्टल् सोसायटीज् जर्नल्', 'बेङ्गॉल् एशियाटिक् सोसायटीज जर्नल्', 'बॉम्बे ब्राञ्च् आव् धी रॉयल् एशियाटिक् सोसायटीज जर्नल्', इत्यादिपुस्तकेषु नानाविध'रिपोर्ट'पुस्तकेषु च प्रतिदिनं प्राकाश्यं नीयन्ते। तेषु कचित्कचिदतिरुचिरं कवित्वमुपलभ्यत इति तत्परिशीलनेन कवितांचातुरी प्राचीनेतिहासज्ञानं च युगपदेव समुपजायते। अतस्तत्तत्पुस्तकेभ्यस्तादृशलेखानामयं संग्रह आरब्धः। भविष्यति चायमावयोर्यत्नो युष्माकं संतोषावह इति दृढं संभावयावः।

काव्यमालासंपादकौ
दुर्गाप्रसाद-काशिनाथौ।

---

## (१)

### धारानगराधिपसुप्रसिद्धभोजमहीपतेः पितामहस्य वाक्पतिराजस्य दानपत्रम्।

याः स्फूर्जत्फणभृद्विषानलमिलद्धूमप्रभाः प्रोल्लस-
न्मूर्धाबद्धशशाङ्ककोटिघटिता याः सैंहिकेयोपमाः।
याश्चाद्रिजाकपोलल्लुलिताः कस्तूरिकाविभ्रमा-
स्ताः श्रीकण्ठकठोरकण्ठरुचयः श्रेयांसि पुष्णन्तु वः॥
यल्लक्ष्मीवदनेन्दुना न सुखितं यन्नार्द्रितं वारिधे-
र्वारा यन्न निजेन नाभिसरसीपद्मेन शान्तिं गतम्।
यच्छेषाहिफणासहस्रमधुरश्वासैर्न चाश्वासितं
तद्राधाविरहातुरं मुररिपोर्वेल्लद्वपुः पातु वः॥

परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीकृष्णराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवैरिसिंहदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसीयकदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्री[1]मदमोघवर्षदेवापराभिधानश्री[2]मद्वाक्पतिराजदेवपृथ्वीवल्लभश्रीवल्लभनरेन्द्रदेवः कुशली श्रीनर्मदातटे गर्दभपानीयभोगे गर्दभपानीयसंबन्धिनि उत्तरस्यां दिशि पिप्परिकानाम्ना तडारे समुपगतान्समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिवासिपट्टकिलजनपदादींश्च बोधयति— अस्तु वः संविदितम्, [3]यथा तडारोऽयमस्माभिः आघाटाः पूर्वस्यां दिशि

१. 'विवेकात्यक्तराज्येन राज्ञेयं रत्नमालिका । रचितामोघवर्षेण विदुषां सदलंकृतिः ॥' इति प्रश्नोत्तररत्नमालाकर्तायमेवामोघवर्षः कश्चिदन्यो वेति संदेहः. २. वाक्पतिराज इति मुञ्जस्यैव नामान्तरं भाति. दशरूपावलोके चतुर्थपरिच्छेदे 'प्रणयकुपितां दृष्ट्वा देवीं–' इत्यादिश्लोकः श्रीवाक्पतिराजदेवनाम्ना समुद्धृतः तत्रैव च पुनरयमेव श्लोकः श्रीमुञ्जनाम्ना समुद्धृतः. एवं पिङ्गलसूत्रवृत्तौ हलायुधेन 'ब्रह्मक्षत्रकुलीनः प्रलीनसामन्तचक्रनुतचरणः । सकलसुकृतैकपुञ्जः श्रीमान्मुञ्जश्चिरं जयति ॥', 'जयति भुवनैकवीरः सीरायुधतुलितविपुलबलविभवः । अनवरतवित्तवितरणनिर्जितचम्पाधिपो मुञ्जः ॥', 'स जयति वाक्पतिराजः सकलार्थिमनोरथैककल्पतरुः । प्रत्यर्थिभूतपार्थिवलक्ष्मीहठहरणदुर्ललितः ॥' एतासूदाहृतास्वार्यास्वार्याद्वये मुञ्ज इति, तृतीयार्यायां च वाक्पतिराज इति नामास्ति. अथ चैतद्दानपत्रस्य संवत्सरे (१०३१), सुभाषितरत्नसंदोहाख्यग्रन्थान्ते जैनेनामितगतियतिना 'समारूढे पूतत्रिदिववसतिं विक्रमनृपे सहस्रे वर्षाणां प्रभवति हि पञ्चाशदधिके (१०५०) । समाप्तं पञ्चम्यामवति धरणिं मुञ्जनृपतौ सिते पक्षे पौषे बुधहितमिदं शास्त्रमनघम् ॥' इत्युक्ते मुञ्जमहीपतिराज्यसमये च स्वल्पमेवान्तरमस्ति, तस्मादस्ति वाक्पतिराज इति मुञ्जस्य नामान्तरमिति भाति. मुञ्जो भोजस्य पितृव्य आसीदिति भोजप्रबन्धोक्तिस्तु प्रमाणान्तराभावान्नातिश्रद्धेया. वाक्पतिराजसमये उज्जयिन्येव राजधान्यासीदित्यस्माद्दानपत्रात्, 'अस्ति क्षितावुज्जयिनीति नाम्ना पुरी विहायस्यमरावतीव । बबन्ध यस्यां पदमिन्द्रकल्पो महीपतिर्वाक्पतिराजदेवः ॥' इत्यस्मात्परिमलकविप्रणीतनवसाहसाङ्कचरितकाव्य(११।९०)श्लोकाच्च प्रतीयते. धारानगरी तु भोजदेवेनैव राजधानीत्वं नीता. 'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥' (४।१४५) इति राजतरङ्गिण्यां वर्णितो गौडवधाख्यप्राकृतकाव्यकर्ता श्रीकमलायुधशिष्यः कान्यकुब्जाधीशयशोवर्मनरेन्द्राश्रितो वाक्पतिराजकविः खिस्ताब्दसप्तमशतकोत्तरार्धसमुद्भूत इत्यस्माद्भिन्नः. ३. 'यथा' इत्यारभ्य 'लक्षिताभिः' एतावत्पर्यन्तमनन्वित इवायं लेखः.

अगारवाहला मर्यादा, तथोत्तरस्यां दिशि चिखिल्लिकासत्कगर्तायासमायता मर्यादा, तथा पश्चिमदिशि गर्दभनदीमर्यादा, तथा दक्षिणस्यां दिशि श्रीपिशाचदेवतीर्थमर्यादा, एवं चतुराघाटोपलक्षिताभिरेकत्रिंशसाहस्त्रिकसंवत्सरेऽस्मिन् भाद्रपदशुक्लचतुर्दश्यां पवित्रकपर्वणि श्रीमदुज्जयिनीसमावासितैः शिवतडागाम्भसि स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिमभ्यर्च्य संसारस्यासारतां दृष्ट्वा

'वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥
भ्रमत्संसारचक्राग्रधाराधारामिमां श्रियम् ।
प्राप्य ये न ददुस्तेषां पश्चात्तापः परं फलम् ॥'

इति जगतो विनश्वरं सकलमिदमाकलय्य उपरिलिखिततडारः स्वसीमतृणकाष्ठयूतिगोचरपर्यन्तः सवृक्षमालाकुलः सहिरण्यभागभोगः सोपरिकरः सर्वादायसमेतः अहिच्छत्रविनिर्गताय धामदक्षिणप्रपन्नाय ज्ञानविज्ञानसंपन्नाय श्रीमद्वसन्ताचार्याय श्रीधनिकपण्डितसूनवे मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये अदृष्टफलमङ्गीकृत्य आचन्द्रार्कार्णवक्षितिसमकालं परया भक्त्या शासनेनोदकपूर्वं प्रतिपादित इति मत्वा तन्निवासिजनपदैर्यथादीयमानभागभोगकरहिरण्यादिकं सर्वमाज्ञाश्रवणविधेयैर्भूत्वा सर्वदास्मै समुपनेतव्यम् । सामान्यं चैतत्पुण्यफलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मादायोऽयमनुमन्तव्यः पालनीयश्च । उक्तं च—

'बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
अस्मत्कुलक्रममुदारमुदाहरद्भि-
रन्यैश्च दानमिदमभ्यनुमोदनीयम् ।

१. दशरूपावलोककर्ता अयमेव धनिकपण्डितः स्यादिति भाति.

लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
दानं फलं परयशःपरिपालनं च ॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयोभूयो याचते रामभद्रः।
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥'

इति ॥ सं० १०३१ भाद्रपदसुदि १४ स्वयमाज्ञादायकश्चात्र श्रीकण्हपैकः। स्वहस्तोऽयं श्रीवाक्पतिराजदेवस्य ॥[1]

(इण्डियन् आण्टिक्वेरी ६।५१–५२)

---

## (२)

## धारानगराधिपतेः सुप्रसिद्धस्य भोजनरेन्द्रस्य दानपत्रम्।

जयति व्योमकेशोऽसौ यः सर्गाय बिभर्ति ताम्।
ऐन्दवीं शिरसा लेखां जगद्बीजाङ्कुराकृतिम् ॥
तन्वन्तु वः स्मरारातेः कल्याणमनिशं जटाः।
कल्पान्तसमयोद्दामतडिद्वलयपिङ्गलाः ॥

परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसीयकदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवाक्पतिराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसिन्धुराजदेवपादानुध्यातपरमभट्टारकम-

---

१. हस्ताक्षराणि वाक्पतिराजदेवस्येति तात्पर्यम्. २. सिन्धुराजपर्यन्तमप्युज्जयिन्येव राजधान्यासीत्. 'अस्ति क्षितावुज्जयिनीति नाम्ना' इत्यादि प्रथमलेखटिप्पणलिखितश्लोकानन्तरं नवसाहसाङ्कचरिते चत्वारिंशच्छ्लोकैरुज्जयिनी वर्णिता. तदनन्तरम् 'राजास्ति तस्यां स कुलाचलेन्द्रनिकुञ्जविश्रान्तयशस्तरङ्गः। भास्वान्ग्रहाणामिव भूपतीनामवाप्तसौख्यो धुरि सिन्धुराजः ॥ (१।५८)', 'दोश्चन्दनानोकहमाप्य यस्य समुल्लसत्सान्द्रयशःप्रसूना। गतातिवृद्धिं लवलीलतेव निबद्धमूला परमारलक्ष्मीः ॥ (१।७७)' इत्युज्जयिन्यामेव सिन्धुराजोऽपि वर्णितः. सिन्धुलः, सिन्धुलकः, इति नामद्वयेनापि क्वचित्सिन्धुराजनिर्देशः. नवसाहसाङ्कचरितं च परिमलेन सिन्धुराजसमय एव निर्मितम्.

हाराजाधिराजपरमेश्वरश्रीभोजदेवः कुशली नागहृदपश्चिमपथकान्तःपाति वीराणके समुपगतान्समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिनिवासिपट्टकिल[1]-जनपदादींश्च समादिशति—अस्तु वः संविदितम्, यथा अतीताष्टसप्तत्यधिकसाहस्रिकसंवत्सरे माघासिततृतीयायां रवावुदगयनपर्वणि कल्पितहलानां लेख्ये श्रीमद्धारायामवस्थितैरस्माभिः[2] स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिं समभ्यर्च्य संसारस्यासारतां दृष्ट्वा

'वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने॥
भ्रमत्संसारचक्राग्रधाराधारामिमां श्रियम्।
प्राप्य ये न ददुस्तेषां पश्चात्तापः परं फलम्॥'

इति जगतो विनश्वरं स्वरूपमाकलय्य उपरिलिखितग्रामः स्वसीमातृणागोचरयूतिपर्यन्तः सहिरण्यभागभोगः सोपरिकरः सर्वादायसमेतः ब्राह्मणधनपतिभट्टाय भट्टगोविन्दसुताय बह्वृचाश्वलायनशाखाय त्रिप्रवराय वेल्लवल्लप्रतिबद्धश्रीवादाविनिर्गतराधसुरसङ्गकर्णाटाय मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये अदृष्टफलमङ्गीकृत्य आचन्द्रार्कार्णवक्षितिसमकालं यावत्परया भक्त्या शासनेनोदकपूर्वं प्रतिपादित इति मत्वा यथादीयमानभागभोगकरहिरण्यादिकमाज्ञाश्रवणविधेयैर्भूत्वा सर्वमस्मै समुपनेतव्यम्। सामान्यं चैतत्पुण्यफलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मादायोऽयमनुमन्तव्यः पालनीयश्च। उक्तं च—

'बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत॥

---

१. अधुना येषां 'पटेल' इति नाम्ना व्यवहारः. २. धारानगर्याम्.

अस्मत्कुलक्रममुदारमुदाहरद्भि-
रन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
दानं फलं परयशःपरिपालनं च ॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयोभूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥'

इति ॥ संवत् १०७८ चैत्रसुदि १४ स्वयमाज्ञामङ्गलं महाश्रीः । स्वहस्तोऽयं श्रीभोजदेवस्य ॥

(इण्डियन् आण्टिक्वेरी ६ । ५३–५४)

---

# (३)

## धारानगराधिपतिसुप्रसिद्धभोजमहीपतेर्वंश्यस्यार्जुनवर्मदेवस्य दानपत्रम् ।

ॐ नमः पुरुषार्थचूडामणये धर्माय ।

प्रतिबिम्बनिभाद्भूमेः कृत्वा साक्षात्परिग्रहम् ।
जगदाह्लादयन्दिश्याद्द्विजेन्द्रो मङ्गलानि वः ॥
जीयात्परशुरामोऽसौ क्षत्रैः क्षुण्णं रणाहतैः ।
संध्यार्कबिम्बमेवोर्वीदातुर्यस्यैति ताम्रताम् ॥
येन मन्दोदरीबाष्पवारिभिः शमितो मृधे ।
प्राणेश्वरीवियोगाग्निः स रामः श्रेयसेऽस्तु वः ॥
भीमेनापि धृता मूर्ध्नि यत्पादाः स युधिष्ठिरः ।
वंशाद्येनेन्दुना जीयात्स्वतुल्य इव निर्मितः ॥

---

१. दानवीराणां परशुरामरामयुधिष्ठिराणां वर्णनं दानपत्रारम्भे समुचितमेव. प्रथमश्लोके च प्रतिग्रहीतुर्द्विजराजस्य वर्णनम्. २. ताम्रपत्रत्वम्. ३. शंभुना, वृकोदरेण च. ४. रश्मयश्चरणाश्च.

परमारकुलोत्तंसः कंसजिन्महिमा नृपः ।
श्रीभोजदेव इत्यासीन्नासीराक्रान्तभूतलः ॥
यद्यशश्चन्द्रिकोद्योते दिगुत्सङ्गतरङ्गिते ।
द्विषन्नृपयशःपुञ्जपुण्डरीकैर्निमीलितम् ॥
ततोऽभूदुदयादित्यो नित्योत्साहैककौतुकी ।
असाधारणवीरश्रीरश्रीहेतुर्विरोधिनाम् ॥
महाकलहकल्पान्ते यस्योद्दामभिराशुगैः ।
कति नोन्मूलितास्तुङ्गा भूभृतः कटकोल्बणाः ॥
तस्माच्छिन्नद्विषन्मर्मा नरवर्मा नराधिपः ।
धर्माभ्युद्धरणे धीमानभूत्सीमा महीभुजाम् ॥
प्रतिप्रभातं विप्रेभ्यो दत्तग्रामपदः स्वयम् ।
अनेकपदतां निन्ये धर्मो येनैकपादपि ॥
तस्याजनि यशोवर्मा पुत्रः क्षत्रियशेखरः ।
तस्मादजयवर्माभूज्जयश्रीविश्रुतः सुतः ॥
तत्सूनुर्वीरमूर्धन्यो धन्योत्पत्तिरजायत ।
गुर्जरोच्छेदनिर्बन्धी विन्ध्यवर्मा महाभुजः ॥
धारयोद्धृतया सार्धं दधाति स्म त्रिधारताम् ।
सांयुगीनस्य यस्यासिस्त्रातुं लोकत्रयीमिव ॥
तस्यामुष्यायणः पुत्रः सुत्रामश्रीरथाशिषत् ।
भूपः सुभटवर्मेति धर्मे तिष्ठन्महीतलम् ॥
यस्य ज्वलति दिग्जेतुः प्रतापस्तपनद्युतेः ।
दावाग्निच्छद्मनाद्यापि गर्जन्गुर्जरपत्तने ॥

१. बाणैः, पर्वतैश्च. २. राजानः, पर्वताश्च. ३. सैन्यम्, नितम्बश्च. ४. धारया नगर्या उद्धृतया उन्नतिं नीतया. ५. धाराद्वयं खड्गस्य, तृतीया च धारानगरी. ६. ख्यातवंशोद्भवः.

देवभूयं गते तस्मिन्नन्दनोऽर्जुनभूपतिः ।
दोष्णा धत्तेऽधुना धात्रीवलयं वलयं यथा ॥
बाललीलाहवे यस्य जैयसिंहे पलायिते ।
दिक्पालहासव्याजेन यशो दिक्षु विजृम्भितम् ॥
काव्यगान्धर्वसर्वस्वनिधिना येन सांप्रतम् ।
भारावतरणं देव्याश्चक्रे पुँस्तकवीणयोः ॥
येन त्रिँविधवीरेण त्रिधा पल्लवितं यशः ।
धवलत्वं दधुस्त्रीणि जगन्ति कथमन्यथा ॥

स एष नरनायकः सर्वाभ्युदयी पगाराप्रतिजागरणके नर्मदोत्तरकूले हथिणावरग्रामे पूर्वराजदत्तावशिष्टायां भूमौ समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिनिवासिपट्टकिलजनपदादींश्च बोधयति—अस्तु वः संविदितम्, यथा श्रीमदमरेश्वरतीर्थावस्थितैरस्माभिर्द्विसप्तत्यधिकद्वादशशतसंवत्सरे भाद्रपदपौर्णमास्यां चन्द्रोपरागपर्वणि रेवाकपिलयोः संगमे स्नात्वा भगवन्तं भवानीपतिमोंकारं लक्ष्मीपतिं चक्रस्वामिनं चाभ्यर्च्य संसारस्यासारतां दृष्ट्वा तथा हि—

'वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥'

इति सर्वं विमृश्यादृष्टफलमङ्गीकृत्य मुक्तावस्थूस्थानविनिर्गताय वाजसनेयशाखाध्यायिने काश्यपगोत्राय काश्यपावत्सारनैध्रुवेति त्रिप्रवराय आवस-

---

१. अनेनैवार्जुनभूपतिना रसिकरञ्जिनीसमाख्या अमरुशतकटीका प्रणीतास्ति. 'क्षिप्ताशुभः सुभटवर्मनरेन्द्रसूनुर्वीरव्रती जगति भोजकुलप्रदीपः । प्रज्ञानवानमरुकस्य कवेः प्रसारःश्लोकाञ्शतं (?) विवृणुतेऽर्जुनवर्मदेवः ॥' अयं श्लोकस्तत्प्रारम्भे वर्तते. २. अयं गुजरातदेशाधिपतेः सिद्धराजजयसिंहादन्य एव कश्चिद्भाति. यतः सिद्धराजजयसिंहराज्यं ११९९ विक्रमसंवत्सरपर्यन्तमासीत्. एतद्दानपत्रं त्वस्मात्संवत्सरात्त्रिसप्ततिवर्षानन्तरं लिखितम्. ३. 'वीणापुस्तकधारिणीमभयदां' इत्यादि सरस्वत्या वीणापुस्तकधारणं प्रसिद्धमेव. ४. दयावीरेण, दानवीरेण, युद्धवीरेण च.

थिकदेल्हप्रपौत्राय पण्डितसोमदेवपौत्राय पण्डितजैत्रसिंहपुत्राय पुरोहितपण्डितश्रीगोविन्दशर्मणे ब्राह्मणाय भूमिरियं चतुःकण्टकविशुद्धा सवृक्षमालाकुला सहिरण्यभागभोगा सोपरिकरषट्टादायलवणादायेत्यादिसर्वादायसमेता सनिधिनिक्षेपा मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये चन्द्रार्कार्णवक्षितिसमकालं यावत्परया भक्त्या शासनेनोदकपूर्वं प्रदत्ता । तन्मत्वा तन्निवासिपट्टकिलजनपदैर्यथादीयमानभागभोगकरहिरण्यादिकमाज्ञाविधेयैर्भूत्वा सर्वममुष्मै दातव्यम् । सामान्यं चैतत्पुण्यफलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मादायोऽयमनुमन्तव्यः पालनीयश्च । उक्तं च—

'बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥
सर्वानेवं भाविनः पार्थिवेन्द्रान्भूयोभूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥'

इति ॥ संवत् १२७२ भाद्रपदसुदि १९ बुधे । दू । श्रीमु ३ । रचितमिदं महासांधि० राजासलखणसंमतेन राजगुरुणा मदनेन । स्वहस्तोऽयं महाराजश्रीअर्जुनवर्मदेवस्य । उत्कीर्णं प० बाप्पदेवेन ॥

(अमेरिकन् ओरिएण्टल् सोसायटीज जर्नल् ७ भागे)

---

## (४)

## श्रीमदकालवर्षदेवसूनोः श्रीध्रुवराजदेवस्य दानपत्रम् ।

ॐ स्वस्ति ।

स[1] वोऽव्याद्वेधसा धाम यन्नाभिकमलं कृतम् ।
हरश्च यस्य कान्तेन्दुकलया कमलंकृतम् ॥

---

१. वेधसा ब्रह्मणा यन्नाभिकमलं धाम कृतं सः, अर्थाद्विष्णुः, वोऽव्यात् युष्मान् रक्षतु. हरः शिवश्च वोऽव्यात्. यस्य कान्तेन्दुकलया कं शिरः अलंकृतं भूषितम्.

आसीद्द्विपत्तिमिरमुद्यतमण्डलाग्रो[1]
ध्वस्तिं नयन्नभिमुखो रणशर्वरीषु ।
भूपः शुचिर्विधुरिवास्तदिगन्तकीर्ति-
र्गोविन्दराज इति राजसु राजसिंहः ॥
दृष्ट्वा चमूमभिमुखीं सुभटाट्टहासा-
मुन्नामितं सपदि येन रणेषु नित्यम् ।
दष्टाधरेण दधता भ्रुकुटीं ललाटे
खड्गं कुलं च हृदयं च निजं च सत्त्वम् ॥
खड्गं कराग्रान्मुखतश्च शोभा मानो मनस्तः सममेव यस्य ।
महाहवे नाम निशम्य सद्यस्त्रयं रिपूणां विगलत्यकाण्डे ॥
तस्यात्मजो जगति विश्रुतशुभ्रकीर्ति-
रार्तार्त्तिहारिहरिविक्रमनामधारी ।
भूपस्त्रिविष्टपनृपानुकृतिः कृतज्ञः
श्रीकक्कराज इति गोत्रमणिर्बभूव ॥
तस्य प्रभिन्नकरटच्युतदानदन्ति-
दन्तप्रहाररुचिरोल्लिखितांसपीठः ।
क्ष्मापः क्षितौ क्षपितशत्रुरभूत्तनूजः
सद्राष्ट्रकूटकनकाद्रिरिवेन्द्रराजः ॥
तस्योपार्जितमहसस्तनयश्चतुरुदधिवलयमालिन्याः ।
भोक्ता भुवः शतक्रतुसदृशः श्रीदन्तिदुर्गराजोऽभूत् ॥
काञ्चीशकेरलनराधिपचोलपाण्ड्य-
श्रीहर्षवज्रटविभेदविधानदक्षम् ।
कर्णाटकं बलमचिन्त्यमजेयमन्यै-
र्भृत्यैः कियद्भिरपि यः सहसा जिगाय ॥
आ सेतोर्विपुलोपलावलिलसल्लोलोर्मिमालाजला-
दा प्रालेयकलङ्कितामलशिलाजालात्तुषाराचलात् ।

१. मण्डलाग्रः खड्गः; (पक्षे) बिम्बाग्रभागः.

आ पूर्वापरवारिराशिपुलिनप्रान्तप्रसिद्धावधे-
येनेयं जगती स्वविक्रमबलेनैकातपत्रीकृता ॥

तस्मिन्दिवं प्रयाते [1]वल्लभराजेऽकृतप्रजाबाधः ।
श्रीकक्कराजसूनुर्महीपतिः कृष्णराजोऽभूत् ॥

यस्य स्वभुजपराक्रमनिःशेषोत्सादितारिदिक्चक्रम् ।
कृष्णस्येवाकृष्णं चरितं श्रीकृष्णराजस्य ॥

[2]शुभतुङ्गतुङ्गतुरगप्रवृद्धरेणूर्ध्वरुद्धरविकिरणम् ।
ग्रीष्मेऽपि नभो निखिलं प्रावृट्कालायते स्पष्टम् ॥

[3]राहप्पमात्मभुजजातबलावलेप-
माजौ विजित्य निशितासिलताप्रहारैः ।
पालिध्वजावलिशुभामचिरेण यो हि
राजाधिराजपरमेश्वरतां ततान ॥

पाता यश्चतुरम्बुराशिरशनालंकारभाजो भुव-
स्त्रय्याश्चापि कृतद्विजामरगुरुप्राज्याज्यपूजादरः ।
दाता मानभृदग्रणीर्गुणवतां योऽसौ श्रियो वल्लभो
भोक्तुं स्वर्गफलानि भूरितपसा स्थानं जगामामरम् ॥

येन श्वेतातपत्रप्रहतरविकरव्राततापात्सलीलं
जग्मे नासीरधूलीधवलितशिरसा [4]वल्लभाख्यः सदाजौ ।
श्रीमद्गोविन्दराजो जितजगदहितस्त्रैणवैधव्यदक्ष-
स्तस्यासीत्सूनुरेकः क्षणरणदलितारातिमत्तेभकुम्भः ॥

तस्यानुजः श्रीध्रुवराजनामा महानुभावोऽप्रहतप्रतापः ।
प्रसाधिताशेषनरेन्द्रचक्रः क्रमेण बालार्कवपुर्बभूव ॥

---

१. वल्लभराज इति दन्तिदुर्गस्य नामान्तरम्. २. शुभतुङ्ग इति कृष्णराजस्य नामान्तरम्. ३. राहप्पो नाम कश्चिन्महीपतिरासीत्. स च कुत्रत्य इत्यधुनापि न ज्ञायत इति स्वकीये दक्षिणेतिहासे भाण्डारकरोपाह्वपण्डितवरश्रीरामकृष्णशर्माणः. ४. वल्लभ इति गोविन्दराजस्य नामान्तरम्.

जाते यत्र च राष्ट्रकूटतिलके सद्भूपचूडामणौ
गुर्वी तुष्टिरथाखिलस्य जगतः सुस्वामिनि प्रत्यहम् ।
सत्यं सत्यमिति प्रशासति सति क्ष्मामासमुद्रान्तिका-
मासीद्धर्मपरे गुणामृतनिधौ सत्यव्रताधिष्ठिते ॥
रक्षता येन निःशेषं चतुरम्भोधिसंयुतम् ।
राज्यं धर्मेण लोकानां कृता तुष्टिः परा हृदि ॥
त[1]स्यात्मजो जगति सत्प्रथितोरुकीर्ति-
र्गोविन्दराज इति गोत्रललामभूतः ।
त्यागी पराक्रमधनः प्रकटप्रताप-
संतापिताहितजनो जनवल्लभोऽभूत् ॥
पृथ्वीवल्लभ इति च प्रथितं यस्यापरं जगति नाम ।
य[2]श्चतुरुदधिसीमामेको वसुधां वशे चक्रे ॥
एकोऽनेकनरेन्द्रवृन्दसहितान्यस्तान्समस्तानपि
प्रोत्खातासिलताप्रहारविधुरान्बद्ध्वा महासंयुगे ।
लक्ष्मीमिप्यचलां चकार विलसत्सच्चामरग्राहिणीं
संसीदद्गुरुविप्रसज्जनसुहृद्बन्धूपभोग्यां भुवि ॥
तत्पुत्रोऽत्र गते नाकमाकम्पितरिपुव्रजे ।
श्रीमहाराजश[3]र्वाख्यः ख्यातो राजाभवद्गुणैः ॥
अर्थिषु यथार्थतां यः समभीष्टफलाप्तिलब्धतोषेषु ।
वृद्धिं निनाय परमाममोघवर्षा[4]भिधानस्य ॥
राजाभूत्तत्पितृव्यो रिपुभवविभवोद्भूत्यभावैकहेतु-
र्ल[5]क्ष्मीवानिन्द्रराजो गुणिनृपनिकरान्तश्चमत्कारकारी ।
रागादन्यान्व्युदस्य प्रकटितविषया यं नृपान्सेवमाना
राज्यश्रीरेव चक्रे सकलकविजनोद्गीततथ्यस्वभावम् ॥

---

१. ध्रुवराजस्य. २. छन्दोभङ्गदूषितोऽयं पाठः. 'यश्चतुरम्बुधिसीमा' इत्युचितः पाठः. ३. शर्वस्य वंशो दक्षिणदेशे राज्यं कृतवान्. तद्वर्णनं दक्षिणेतिहासे द्रष्टव्यम्. ४. अमोघवर्ष इति शर्वस्य नामान्तरम्. ५. अग्रे वर्ण्यमान इन्द्रराजवंशो गुजरातदेशे राज्यं लब्धवान्.

[1]निर्वाणावाप्तित्राणाम्प्रहितहितजना यस्य माना: सुवृत्तं
वृत्तं जित्वान्यराज्ञां चरितमुदयवान्सर्वतोदिक्षु केभ्य: ।
एकाकी हतवैरिस्खलनकृतिमहत्यातिराज्ये महाङ्को
लाटीयं मण्डलं यस्तपन इव निजस्वामिदत्तं ररक्ष ॥

सूनु[2]र्बभूव खलु तस्य महानुभावः
शास्त्रार्थबोधमनुजलाञ्छितचित्तवृत्तिः ।
यो गोणनामपरिवारमुवाह पूर्वं
श्रीकक्कराजसुभगव्यपदेशमुच्चैः ॥

श्रीकर्कराज इति रक्षितराज्यभारः
सारं कुलस्य तनयो नयशालिशौर्यः ।
तस्याभवद्विभवनन्दितबन्धुसार्थः
पार्थः सदैव धनुषि प्रथमः शुचीनाम् ॥

दानेन मानेन सदाज्ञया वा वीर्येण शौर्येण च कोऽपि भूपः ।
एतेन तुल्योऽस्ति नवेति कीर्तिः सकौतुका भ्राम्यति यस्य लोके ॥

स्वेच्छागृहीतविषयान्दृढसंघभाजः
प्रोद्वृत्तदृप्ततरशौल्किकराष्ट्रकूटान् ।
उत्खातखड्गनिजबाहुबलेन जित्वा
यो[3]ऽमोघवर्ष इति राज्यपदे व्यधत्त ॥

पुत्रीयतस्तस्य महानुभावः कृती कृतज्ञः कृतवीर्यवीर्यः ।
वशीकृताशेषनरेन्द्रवृन्दो बभूव सूनुर्ध्रुवराजनामा ॥

चन्द्रो जडो हिमगिरिः सहिमः प्रकृत्या
वातश्चलश्च तपनस्तपनस्वभावः ।
क्षारः पयोधिरिति तैः सममस्य नास्ति
येनोपमा नि[4]रुपमस्तत एव गीतः ॥

---

१ अस्फुटार्थोऽयं श्लोकः. २. कक्कराजस्य सूनुरपि कक्कराजनामेति संदिग्धम्. ३. अमोघवर्ष इति कक्कराजस्य नामान्तरम्. ४. निरुपम इति ध्रुवराजस्य नामान्तरम्.

रणशिरसि खड्गघातैर्वल्लभदण्डं पराङ्मुखीकृत्य।
शस्त्रशतशुद्धदेहः स्वर्गमगादेक एवासौ॥
तस्याशेषनराधिपहृतयशसः स्वर्गलोकगतकीर्तेः।
श्रीमानकालवर्षस्तनयः समभूत्कुलालम्बः॥
वल्लभदण्डाक्रान्तं विघटितदुष्टानुजीविवर्गेण।
पितृपर्यागतमचिरान्मण्डलमध्यासितं येन॥
प्रियवादी सत्यधनः श्रीमाननुजीविवत्सलो मानी।
प्रतिपक्षक्षोभकरः शुभतुङ्गः शुभकरः सुहृदाम्॥
तस्मिन्स्वर्गीभूते गुणवति गुणवान्गुणाधिकप्रीतिः।
समभूद्ध्रुवराजसमो ध्रुवराजस्तुष्टिकृल्लोके॥
इतोऽभिमुखमापतत्प्रबलगूर्जराणां बल-
मितो विमुखवल्लभो विकृतिमागता बान्धवाः।
इतोऽनुजविकुर्वितं शममगात्समस्तं भया-
दहो स्फुरणमद्भुतं निरुपमेन्द्र खड्गस्य ते॥
गुर्जरबलमतिबलवत्समुद्यतं बृंहितं च कुल्येन।
एकाकिनैव विहितं पराङ्मुखं लीलया येन॥
यश्चाभिषिक्तमात्रः परं यशस्त्यागशौर्यतोऽवाप।
शुभतुङ्गजोऽतितुङ्गः पदं यदाप्नोति नो चित्रम्॥
यश्च स्वभुजबलार्जितमपीह राज्यं विभज्य भृत्यानाम्।
भयमपि विद्वेषिजने धनं ददावर्थिने कामम्॥
धारावर्षसमुन्नतिं गुरुतरामालोक्य लक्ष्म्या युतो
धामव्याप्तदिगन्तरोऽपि मिहिरः सद्वंश्यवाहान्वितः।
यातः सोऽपि शमं पराभवतमोव्याप्ताननः किं पुन-
र्येऽतीवामलतेजसा विरहिता हीनाश्च दीना भुवि॥

---

१. शुभतुङ्ग इत्यकालवर्षस्य नामान्तरम्. २. निरुपम इति तृतीयध्रुवराजस्यापि नामान्तरम्. ३. धारावर्ष इत्यपि तृतीयध्रुवराजस्य नामान्तरम्.

यं प्राप्य विजितपूर्वजसकलगुणं पालितापि सगराद्यैः।
प्रियनाथलाभतुष्टा वसुधापि सकामतामाप ॥
तेनेदमनिलविद्युच्चञ्चलमवलोक्य जीवितमसारम्।
क्षितिदानपरमपुण्यः प्रवर्तितो धर्मदायोऽयम् ॥

स च समधिगताशेषमहाशब्दमहासामन्ताधिपतिधारावर्षश्रीध्रुवराजदेवः सर्वानेव यथासंबध्यमानान्राष्ट्रपतिविषयपतिग्रामकूटायुक्तनियुक्तकाधिकारिकवासापकमहत्तरादीन्समनुदर्शयति—अस्तु वः संविदितम्। यथा मया मातापित्रोरात्मनश्चैहिकामुष्मिकपुण्ययशोभिवृद्धये

विप्रोऽभूद्भद्रपल्ल्यां बहुधनजनतासंकुलायां धरायां
ख्यातः श्रीढोड्डिनामा जनितजनसुखोऽध्वर्युसब्रह्मचारी।
यस्मिन्नर्थिजना ददत्यविरतं प्राज्यं कृतान्नादिकं
निश्चिन्तोदरपूरणाः समभवन्दुर्भिक्षकालेष्वपि ॥
त्रेन्नां स लब्ध्वा ध्रुवराजदेवात्सत्रं ददौ सर्वजनोपकारि।
दिने दिने यस्य गृहे नरेन्द्राः सहस्रशो भुञ्जते भूसुराश्च ॥

तस्य सुतः सत्रपतिर्नेनप्पनामा । तत्पुत्राय लाक्षायणसगोत्राय जोजिभाअभिधानाय कर्मान्तपुरप्रतिबद्धषोडशोत्तरग्रामशतान्तःपाती पाराहणकं ग्रामः। यस्याघाटनानि—पूर्वस्यां दिशि कुण्डीरवल्लिकानाम ग्रामः। दक्षिणतः त्रेन्नाहारान्तःपाती खोराच्छकं नाम ग्रामः। तथा दक्षिणत एव जोणन्धानामग्रामः । पश्चिमतो मोत्तकाभिधानं ब्राह्मणस्थानम्। उत्तरतो मोड्वासकं नाम ग्रामः। एवमयं चतुराघाटनोपलक्षितः सोद्रङ्गः सपरिकरः सवृक्षमालाकुलः ससीमापर्यन्तः सदण्डदशापराधः सोत्पद्यमानवेष्टिकः सधान्यहिरण्यादेयोऽचाटभटप्रवेश्यः सर्वराजकीयानामहस्तप्रक्षेपणीयः भूमिच्छिद्रन्यायेन आचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनः पुत्रपौत्रान्वयक्रमोपभोग्यः पूर्वदत्तदेवदायब्रह्मदायरहितः अभ्यन्तरसिद्ध्या

१. अस्मिन्पद्ये स्रग्धराशार्दूलविक्रीडितच्छन्दोनिबद्धौ पूर्वोत्तरार्धौ. तेनेयमुपजातिः. नैतादृश्युपजातिः सत्कविभिः प्रयुज्यते. 'रामं लक्ष्मणपूर्वजं' इत्यादि पौराणिकश्लोकेषु क्वचिदुपलभ्यते.

शकनृपकालातीतसंवत्सरशतेषु सप्तस्वेकोननवत्यधिकेष्वङ्कतः ७८९ ज्येष्ठामावास्यायामादित्यग्रहणपर्वणि श्रीभृगुकच्छे नर्मदायां मूलस्थानतीर्थे स्नात्वा सत्रप्रवर्तनार्थं बलिचरुवैश्वदेवाग्निहोत्रादिक्रियोपसर्पणार्थं च उदकातिसर्गेण दत्तः । अतोऽस्योचितया ब्रह्मदायस्थित्या भुञ्जतो भोजयतः कृषतः कर्षापयतः प्रतिदिशतो वा न केनचित्परिपन्थना कार्या । तथागामिनृपतिभोगपतिभिरस्मद्वंश्यैरन्यैर्वा सामान्यभूदानफलमवेत्य विद्युल्लोलान्यनित्यान्यैश्वर्याणि तृणाग्रलग्नजलबिन्दुचञ्चलं च जीवितमाकलय्य स्वदायनिर्विशेषोऽयमस्मद्दायोऽनुमन्तव्यः परिपालयितव्यश्च । यश्चाज्ञानतिमिरपटलावृतमतिराच्छिन्द्यादाच्छिद्यमानं वानुमोदेत स पञ्चभिर्महापातकैरुपपातकैश्च संयुक्तः स्यादित्युक्तं भगवता वेदव्यासेन व्यासेन—

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णाहयो हि जायन्ते भूमिदायं हरन्ति ये ॥
अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकत्रयं तेन भवेद्धि दत्तं यः काञ्चनं गां च महीं च दद्यात् ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
स्वदत्तां परदत्तां वा यत्नाद्रक्ष नराधिप ।
महीं महिमतां श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥
नायमत्यन्तसंवासः कस्यचित्केनचित्सह ।
अपि स्वेन शरीरेण किमुतान्यैः पृथग्जनैः ॥
प्राणेन धार्यते कायः स च प्राणः समीरणात् ।
समीरश्चातिचपलः कृतमप्यायुरद्भुतम् ॥

सप्तलोकैकनाथस्य विष्णोरपि महात्मनः ।
नेयं नियतवासा श्रीः किमुतान्यस्य कस्यचित् ॥
सामान्योऽयं धर्मसेतुः सर्वेषामिह भूभुजाम् ।
यतोऽतः पालनीयोऽयं काले काले महात्मभिः ॥
कोटिश्च वाजपेयानां लक्षं विश्वजितां तथा ।
सहस्रमश्वमेधानां स्वहस्तश्चैव तत्समम् ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
अतिविमलमनोभिरात्मनीनैर्नहि पुरुषैः परकीर्तयो विलोप्याः ॥
श्रीमच्छुभतुङ्गसुतो धारावर्षानुजो रणे येन ।
निर्जित्य वैरिवर्गं राज्यं विहितं स्थिरं भ्रातुः ॥
भस्मीकृत्यारिसेनां हयगजबहुलामप्यसंतुष्टभावो
ब्रह्माण्डं व्याप्तुकामः पृथुचटुलशिखाभासुरः क्रोधवह्निः ।
दृष्टः पद्मासनाद्यैर्गगनतलगतैर्यस्य गीर्वाणवृन्दैः
श्रीमद्गोविन्दराजो निरुपमविहितः शासने दूतकोऽत्र ॥
लिखितं चेदं सांधिविग्रहिकश्रीकल्याणेनेति । स्वहस्तोऽयं मम श्रीध्रुवराजदेवस्य श्रीमदकालवर्षदेवसूनोः ॥

(इण्डिअन् आण्टिक्केरी १२।१८१)

---

## (६)

### राष्ट्रकूटवंशोद्भवलाटदेशाधीश्वरकर्कराजमहीपतेर्दानपत्रम् ।

स वोऽव्याद्वेधसा धाम यन्नाभिकमलं कृतम् ।
हरश्च यस्य कान्तेन्दुकलया कमलंकृतम् ॥
स्वस्ति स्वकीयान्वयवंशकर्ता श्रीराष्ट्रकूटामलवंशजन्मा ।
प्रदानशूरः समरैकवीरो गोविन्दराजः क्षितिपो बभूव ॥
यस्याङ्गमात्रजयिनः प्रियसाहसस्य
क्ष्मापालवेषफलमेव बभूव सैन्यम् ।

---

१. अयं गोविन्दराजो दानकर्तुर्ध्रुवराजदेवस्यानुजः.

मुक्त्वा च शंकरमधीश्वरमीश्वराणां
नावन्दतान्यममरेष्वपि यो मनस्वी ॥
पुत्रीयतश्च खलु तस्य भवप्रसादा-
त्सूनुर्बभूव गुणराशिरुदारकीर्तिः ।
यो गौणनामपरिवारमुवाह मुख्यं
श्रीकर्कराजसुभगव्यपदेशमुच्चैः ॥
सौराज्यजल्पे पतिते प्रसङ्गान्निदर्शनं विश्वजनीनसंपत् ।
राज्यं बलेः पूर्वमहो बभूव क्षिताविदानीं तु नृपस्य यस्य ॥
अत्यद्भुतं चेदममंस्त लोकः कलिप्रसङ्गेन यदेकपादम् ।
जातं वृषं यः कृतवानिदानीं भूयश्चतुष्पादमविघ्नचारम् ॥
चित्रं न चेदं यदसौ यथावच्चक्रे प्रजापालनमेतदेव ।
विष्णौ जगत्राणपरे मनःस्थे तस्योचितं तन्मयमानसस्य ॥
धर्मात्मनस्तस्य नृपस्य जज्ञे सुतः सुधर्मा खलु कृष्णराजः ।
यो वंश्यमुन्मूल्य विमार्गभाजं राज्यं स्वयं गोत्रहिताय चक्रे ॥
ब्रह्मण्यता तस्य च कापि साभूद्विप्रा यया केवलजातयोऽपि ।
श्रेष्ठद्विजन्मोचितदानलुब्धाः कर्माण्यनूचानकृतानि चक्रुः ॥
इच्छातिरेकेण कृषीवलानां पयो यथा मुञ्चति जातु मेघे ।
भवेन्मनस्तद्विरतौ तथाभूद्यस्मिन्धनं वर्षति सेवकानाम् ॥
यो युद्धकण्डूतिगृहीतमुच्चैः शौर्योष्मसंदीपितमापतन्तम् ।
महावराहं हरिणीचकार प्राज्यप्रभावः खलु राजसिंहः ॥
एलापुराचलगताद्भुतसंनिवेशं
यद्वीक्ष्य विस्मितविमानचरामरेन्द्राः ।
एतत्स्वयंभु शिवधाम न कृत्रिमे श्री-
र्दृष्टेदृशीति सततं बहु चर्चयन्ति ॥

---

१. आत्मनः पुत्रमिच्छतः. २. अनूचानः साङ्गवेदविचक्षणः. ३. नृपविशेषम्. ४. दक्षिणहैदराबादराज्यान्तर्गतदौलताबादनगरसमीपे 'एलोरा' नाम्नाधुना प्रसिद्धोऽयमेलापुराचलः. तत्र चातिसुन्दराणि सुरमन्दिराणि पर्वतमुत्कीर्य निर्मितान्यद्यापि विद्यन्ते.

भूयस्तथाविधकृतौ व्यवसायहानि-
रेतन्मया कथमहो कृतमित्यकस्मात्।
कर्तापि यस्य खलु विस्मयमाप शिल्पी
तन्नामकीर्तनमकार्यत येन राज्ञा॥
गङ्गाप्रवाहहिमदीधितिकालकूटै-
रत्यद्भुताभरणकैः कृतमण्डनोऽपि।
माणिक्यकाञ्चनपुरःसरसर्वभूत्या
तत्र स्थितः पुनरभूष्यत येन शंभुः॥
नृपस्य तस्य ध्रुवराजनामा महानुभावस्तनयो बभूव।
तृणीकृतान्[1]यस्य पराक्रमेण प्रतापवह्निर्द्विषतो ददाह॥
लक्ष्मीप्रसाधनविधावुपयोगि कृत्यं
यश्चिन्तयन्स्वयमभूदनिशं कृतार्थः।
किं वात्र चित्रमनपेक्ष्य सहायमीशैः[2]
सर्वः पुमान्निजवधूं स्ववशां विधातुम्॥
यो गङ्गायमुने तरङ्गसुभगे गृह्णन्परेभ्यः समं
साक्षाच्चिह्ननिभेन चोत्तमपदं तत्प्राप्तवानैश्वरम्।
देहासंमितवैभवैरिव गुणैर्यस्य भ्रमद्भिर्दिशो
व्याप्तास्तस्य बभूव कीर्तिपुरुषो गोविन्दराजः सुतः॥
प्रदेशवृत्तिव्यवसायभाजं पुरातनानामपि पार्थिवानाम्।
यशांसि यो नाम जहार भूपो भग्नप्रचण्डाखिलवैरिवीरः॥
उन्मूलितोत्तुङ्गनरेन्द्रवंशो महानरेन्द्रीकृततुच्छभृत्यः।
स्वेच्छाविधायी चरितानुकारं चकार यो नाम विधेः क्षितीशः॥
हिञ्जीर[3]शिञ्जितरणच्चरणानरातीं-
न्कुर्वन्क्षणेन विदधेऽद्भुतकर्म यश्च।

---

१. यस्य पराक्रमेण तुच्छीकृतान्; (पक्षे) तृणत्वं प्रापितान्. २. समर्थैः. ३. हिञ्जीरो लोहशृङ्खला. निगड इति यावत्.

चक्रे तथाहि न तथाशु वधं परेषां
पार्थोऽपि नाम भुवनत्रितयैकवीरः ॥
कल्पक्षयक्षणसमुद्धतवातहेला-
दोलायमानकुलशैलकुलानुकारम् ।
यन्मुक्तचण्डशरजालजवप्रणुन्ना
युद्धागता रिपुगजेन्द्रघटा चकार ॥
भ्राता तु तस्येन्द्रसमानवीर्यः श्रीमान्भुवि क्ष्मापति**रिन्द्रराजः** ।
शास्ता बभूवाद्भुतकीर्तिसूतिस्तद्दत्तलाटेश्वरमण्डलस्य ॥
अद्यापि यस्य सुरकिंनरसिद्धसाध्य-
विद्याधराधिपतयो गुणपक्षपातात् ।
गायन्ति कुन्दकुसुमश्रि यशो यथास्वं
धामस्थिताः सहचरीकुचदत्तहस्ताः ॥
येनैकेन च गुर्जरेश्वरपतिर्योद्धुं समभ्यागतः
शौर्यप्रोद्भटकंधरो मृग इव क्षिप्रं दिशो ग्राहितः ।
भीतासंहतदक्षिणापथमहासामन्तचक्रं यतो
रक्षामाप विलुण्ठ्यमानविभवं श्रीवल्लभेनादरात् ॥
तस्यात्मजः प्रथितविक्रमवैरिवर्ग-
लक्ष्मीहठाहरणसंततलब्धकीर्तिः ।
श्रीकर्कराज इति संश्रितपूरिताशः
शास्त्रार्थबोधपरिपालितसर्वलोकः ॥
राज्ये यस्य न तस्करस्य वसतिर्व्याधेः प्रसूतिर्मृता
दुर्भिक्षं न च विभ्रमस्य महिमा नैवोपसर्गोद्भवः ।
क्षीणो दोषगणः प्रतापविनतोऽशेषोऽरिवर्गस्तथा
नो विद्वत्परिपन्थिनी प्रभवति क्रूरा खलानां मतिः ॥
गौडेन्द्रवङ्गपतिनिर्जयदुर्विदग्ध-
सद्गुर्जरेश्वरदिगर्गलतां च यस्य ।

नीत्वा भुजं विहतमालवरक्षणार्थं
स्वामी तथान्यमपि राज्यफलानि भुङ्क्ते ॥

तेनेदं विद्युच्चञ्चलमालोक्य जीवितं क्षितिदानं च परमपुण्यं प्रवर्तितोऽयं धर्मदायः। स च लाटेश्वरः समधिगताशेषमहाशब्दमहासामन्ताधिपतिसुवर्णवर्षश्रीकर्कराजदेवो यथासंबध्यमानकान्राष्ट्रपतिविषयपतिग्रामकूटाधिकारिकमहत्तरादीन्समनुबोधयति—अस्तु वः संविदितम्—यथा मया सिद्धशमीसमावासितेन मातापित्रोरात्मनश्चैहिकामुष्मिकपुण्ययशोभिवृद्धये श्रीवलभीविनिर्गततच्चातुर्विद्यसामान्यवात्स्यायनसगोत्रमाध्यंदिनसब्रह्मचारिब्राह्मणभानवे भट्टसोमादित्यपुत्राय आङ्कोट्टकचतुरशीत्यन्तर्गतवडपद्रकाभिधानग्रामः, यस्याघाटनानि—पूर्वतो जम्बूवाविकाग्रामः, तथा दक्षिणतो महासेनकाख्यं तडागम्, तथा पश्चिमतोऽङ्कोट्टकम्, तथोत्तरतो वग्वाच्छग्रामः, एवमसौ चतुराघाटनोपलक्षितः सोद्रङ्गः सोपरिकरः सभूतवातप्रत्यायः सदण्डदशापराधः सोत्पद्यमानविष्टिकः सधान्यहिरण्यादेयः सर्वराजकीयानामहस्तप्रक्षेपणीयः आ चन्द्रार्कार्णवसरित्पर्वतसमकलीनः पुत्रपौत्रान्वयभोग्यः पूर्वप्रदत्तदेवदायब्रह्मदायरहितो भूमिच्छिद्रन्यायेन शकनृपकालातीतसंवत्सरशतेषु सप्तसु चतुस्त्रिंशदधिकेषु महावैशाख्यां स्नात्वोदकातिसर्गेण बलिचरुवैश्वदेवाग्निहोत्रातिथिपञ्चमहायज्ञक्रतुक्रियाद्युत्सर्पणार्थं प्रतिपादितः। अतोऽस्योचितया ब्रह्मदायस्थित्या भुञ्जतो भोजयतः प्रतिदिशतो वा कृषतः कर्षयतश्च न केनचित्परिपन्थना कार्या। तथागामिभिरस्मद्वंश्यैरन्यैर्वा सामान्यं भूमिदानमवगच्छद्भिर्विद्युल्लोलान्यनित्यान्यैश्वर्याणि तृणाग्रलग्नजलबिन्दुचञ्चलं च जीवितमाकलय्य स्वदायनिर्विशेषोऽयमस्मद्दायोऽनुमन्तव्यः पालनीयश्च । यश्चाज्ञानतिमिरपटलावृतमतिराच्छिद्यादाच्छिद्यमानं चानुमोदेत स पञ्चभिर्महापातकैरुपपातकैश्च युक्तः स्यादिति। उक्तं च भगवता वेदव्यासेन व्यासेन—

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णाहयो हि जायन्ते भूमिदायापहारिणः ॥
अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकत्रयं तेन भवेच्च दत्तं यः काञ्चनं गां च महीं च दद्यात् ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
स्वदत्तां परदत्तां वा यत्नाद्रक्ष नराधिप ।
महीं महीभृतां श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
अतिविमलमनोभिरात्मनीनैर्नहि पुरुषैः परकीर्तयो विलोप्याः ॥

उक्तं च भगवता रामभद्रेण—

सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ॥

दूतकश्चात्र राजपुत्रश्रीदन्तिवर्मा । स्वहस्तोऽयं मम श्रीकक्कराजस्य श्रीमदिन्द्रराजसुतस्य । लिखितं चैतन्मया महासंधिविग्रहाधिकृतकुलपुत्रकदुर्गभटसूनुना नेमादित्येनेति । अयं च ग्रामोऽतीतनरपतिपरीक्षणाङ्कोट्टकश्रीचातुर्विद्याय दत्तोऽभूत् । तेनापि कुराजजनितविलोपविच्छिन्नपरिभोगं विज्ञानवर्मान्यस्य वा विशिष्टस्य कस्यचिद्भवतु द्विजन्मन इति निश्चित्य सुवर्णवर्षदीयमानं वटपुरवासिने भानुभट्टायानुमोदितः । शालाताप्यं गृहीत्वा तालावारिकादिगणं चोद्दिश्य ताम्बूलप्रदानपूर्वकं यथालोभसेवनं चाभाष्य आदिश्य प्राकृतिकमपि पुरमिति । तथा त्रियागेश्वरपरमाधीशपादमूलं जानातीति[1] ॥

(इण्डियन् आण्टिक्वेरी १२ । १५८–१६२)

---

१ इत उत्तरमस्फुटार्थोऽयं लेखः.

## ( ६ )

## राष्ट्रकूटवंशोद्भवस्य चतुर्थगोविन्दनृपतेर्दानपत्रम् ।

ओम् ॥

जयन्ति ब्रह्मणः सर्गनिष्पत्तिमुदितात्मनः ।
सरस्वतीकृतानन्दा मधुराः सामगीतयः ॥

ताराचक्राब्जषण्डावृतगगनसरःपद्मिनीराजहंसा-
स्त्रैलोक्यैकाधिपत्यस्थितमदनमहाराजशुभ्रातपत्रात् ।
लावण्यक्षीरसिन्धोर्द्युतिरजतगिरेर्दिग्वधूदन्तपत्रा-
द्वंशः सोमादयं यस्त्रिभुवनकमलावाससौधाद्रुपेतः ॥

तस्माच्छ्रियः कुलगृहं भवनं महिम्नः
क्रीडास्पदं स्थितिमहर्द्धिगभीरतानाम् ।
आपन्नसत्त्वपरिपालनलब्धकीर्ति-
र्वंशो बभूव भुवि सिन्धुनिभो यदूनाम् ॥

परिणतपरमण्डलः कलावान्प्रविततवहलयशोंशुपूरिताशः ।
शशधर इव दन्तिदुर्गराजो यदुकुलविमलवियत्यथोदियाय ॥

तस्याद्यं नृपतेः पितृव्यमुदयी श्रीवीरसिंहासनं
मेरोः शृङ्गमिवाधिरुह्य रविवच्छ्रीकृष्णराजस्ततः ।
ध्वस्तोद्रिक्तचलुक्यवंशतिमिरः पृथ्वीभृतां मस्तके
न्यस्तात्तः सकलं जगत्प्रवितततैस्तेजोभिराक्रान्तवान् ॥

तस्माद्गोविन्दराजोऽभूदिन्दुबिम्बशिलातले ।
यस्यारिलोपधूम्रोऽङ्कः प्रशस्तिरिव लक्ष्यते ॥

तस्याभवद्भुवनपालनवीरबुद्धि-
रुद्धूतशत्रुकुलसंततिरिद्धतेजाः ।
राजानुजो निरुपमापरनामधेयो
यन्मुद्रयाम्बुधिरपि प्रथितः समुद्रः ॥

---

१ 'उदीतः' इति साधीयान्पाठः.

तदनु जगत्तुङ्गोऽजनि परिहृतनिजसकलमण्डलाभोगः।
गतयौवनवनिताजनकुचसदृशा यस्य वैरिनृपाः॥

तस्माच्चामोघवर्षोऽभवदतुलबलो येन कोपादपूर्वै-
श्चालुक्याभ्यूषखाद्यैर्जनितरतियमः प्रीणितो विङ्गवल्ल्याम्।
वैरिब्राण्डोदरान्तर्बहिरुपरि तले यन्न लब्धावकाशं
तोयव्याजाद्विशुद्धं यश इव निहितं तज्जगत्तुङ्गसिन्धौ॥

तस्मादकालवर्षो नृपतिरभूद्यत्पराक्रमत्रस्तैः।
सद्यः समण्डलाग्रं खेटकमहितैः परित्यक्तम्॥

सहस्रार्जुनवंशस्य भूषणं कोक्कलात्मजा।
तस्याभवन्महादेवी जगत्तुङ्गस्ततोऽजनि॥

गम्भीराद्रत्ननिधेर्भूभृत्प्रतिपक्षरक्षणक्षमतः।
कोक्कलसुतरणविग्रहजलधेर्लक्ष्मीः समुत्पन्ना॥

सा जायाजायताजातशत्रोस्तस्य महीभुजः।
भीमसेनार्जुनोपात्तयशोभूषणशालिनः॥

तत्र जगत्तुङ्गोदयधरणीधरतः प्रतापकलितात्मा।
लक्ष्म्या नन्दन उदितोऽजनि विजयी राजमार्तण्डः॥

स्थितिचलितसकलभूभृत्पक्षच्छेदाभिमुक्तभुजवज्रः।
अनिमिषदर्शनयोग्यो यः सत्यमिहेन्द्रराज इति॥

---

१ चालुक्या एव अभ्यूषखाद्याः 'पोली' इति ख्याता भक्ष्यविशेषास्तैर्जनिता रतिः प्रीतिर्यस्य तादृशो यम इत्यर्थः. 'आपक्वं पौलिरभ्यूषः' इत्यमरः. वात्स्यायनीयकामसूत्रटीकाकारो यशोधरस्तु 'अभ्यूषखादिका, विटपस्थानामग्नौ प्लोषितानां फलानां खादनं यत्र' इति व्याख्यातवान्. इण्डियन् आण्टिक्केरीमध्ये एतल्लेखप्रकाशकः फ्लीटपण्डितस्तु 'चालुक्य-अभ्यूषख-आद्यैर्' इति पदच्छेदं विधाय भाषान्तरे 'Châlukyas, Abhyûshakhas and others' इत्याद्युक्तवान्. २. मण्डलाग्रः खड्गो मण्डलं देशश्च. ३. खेटकं चर्म, मान्यखेटनाम्ना प्रसिद्धा राष्ट्रकूटमहीपतीनां राजधानी च. ४. 'नदीनां मेकलसुता नृपाणां रणविग्रहः। कवीनां च सुरानन्दश्चेदिमण्डलमण्डनम्॥' इति राजशेखरकविना वर्णितो रणविग्रहोऽप्ययमेव स्यात्.

यस्तस्मिन्दशकण्ठदर्पदलने श्रीहैहयानां कुले
कोक्कल्लः प्रतिपादितोऽस्य च गुणज्येष्ठोऽर्जुनोऽभूत्सुतः ।
तत्पुत्रोऽम्मणदेव इत्यतिबलस्तस्माद्दिजाम्बाभव-
त्पत्नीवाम्बुनिधेरुमेव हिमवन्नाम्नः क्षमाभृत्प्रभोः ॥
श्रीन्द्रनरेन्द्रात्तस्यां सूनुरभूद्भूपतिर्द्विजाम्बायाम् ।
गोविन्दराजनामा कामाधिकरूपसौन्दर्यः ॥
सामर्थ्ये सति निन्दिता प्रविहिता नैवाग्रजे क्रूरता
बन्धुस्त्रीगमनादिभिः कुचरितैरावर्जितं नायशः ।
शौचाशौचपराङ्मुखं न च भिया पैशाच्यमङ्गीकृतं
त्यागेनासमसाहसैश्च भुवने यः साहसाङ्कोऽभवत् ॥
वर्षन्सुवर्णवर्षः प्रभूतवर्षोऽपि कनकधाराभिः ।
जगदखिलमेककाञ्चनमयमकरोदिति जनैरुक्तः ॥
यदधिदिग्विजयावसरे सति प्रसभसंभ्रमभावनयेव भूः ।
सपदि नृत्यति पालिमहाध्वजोच्छ्रितकरान्यकुनाथविवर्जिता ॥
सहते नहि मण्डलाधिपं परमेषोऽभ्युदयी समुद्धतम् ।
इति जातभिया धियाग्रतो रविचन्द्रावपि यस्य धावतः ॥
अवनतपरमण्डलेश्वरं सह विजयांशुभिवेश्म शोभितम् ।
समहिमकरतोरणं चिरं निजतेजस्तति यस्य राजते ॥
सहते समवाहिनीमयं न परेषां सविशेषशालिनीम् ।
यदनिन्दितराजमन्दिरं ननु गङ्गा यमुना च सेवते ॥
यस्मिन्राजनि सौराज्यं निर्जितारि वितन्वति ।
विमानस्थितिरित्यासीन्न भोगेषु कदाचन ॥
यस्योद्दामप्रतापानलबहलशिखाकज्जलं नीलमेघा
विस्फूर्जत्खड्गधारास्फुरणविसरणान्येव विद्युद्विलासाः ।
दुर्वारारीभकुम्भस्थलदलनगलन्मौक्तिकान्येव तारा-
श्चन्द्रक्षीराब्धिशेषा भृतभुवनयशोराशिनिष्यन्दितानि ॥

१. 'विस्फूर्जन्' इति 'इण्डियन् आण्टिक्वेरी'मुद्रितः पाठः.

यस्मिन्कण्टकशोधनोत्सुकमनस्यम्भोजनालैर्भिये-
वोन्मग्नं न पयःसु कोशवसतिर्लक्ष्मीः कृतोपायनम् ।
केतक्या पवनोच्छ्सन्निजरजःपुञ्जान्धकारोदरे
भूगर्भे पनसेन वेत्रलतया द्वार्यात्मशुद्ध्यै स्थितम् ॥

यश्च समुपहसितहरनयनदहनो विहितानित्यकंदर्परूपसौन्दर्यदर्पः श्रीनित्यकंदर्पः प्रभुमन्त्रशक्त्युपबृंहितोत्साहशक्तिसमाक्षिप्तशतमखमुखश्लाघ्यचतुर्मुखः प्रथितैकविक्रमाक्रान्तवसुंधराहितकरणपरायणः श्रीविक्रान्तनारायणः स्वकरकलितहेतिहलदलितविपक्षवक्षःस्थलक्षेत्रः श्रीनृपतित्रिनेत्रः समभवत् । स च परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमन्नित्यवर्षदेवपादानुध्यातः परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमत्सुवर्णवर्षदेवपृथ्वीवल्लभश्रीमद्वल्लभनरेन्द्रदेवः कुशली सर्वानेव यथासंबध्यमानकान्राष्ट्रपतिविषयपतिग्रामकूटमहत्तरायुक्तकोपयुक्तकाधिकारिकान्समादिशति—अस्तु वः संविदितम्—यथा [1]मान्यखेटराजधानीस्थिरतरावस्थानेन मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये पूर्वलुप्तानपि देवभोगाग्रहारान्प्रतिपालयता प्रतिदिनं च निरवधिनमस्यग्रामशासनानि शतशः प्रयच्छता [मया] शकनृपकालातीतसंवत्सरशतेष्वष्टसु पञ्चपञ्चाशदधिकेष्वङ्कतोऽपि संवत्सराणां ८५५ प्रवर्तमानविजयसंवत्सरान्तर्गतश्रावणपौर्णमास्यां वारे गुरोः पूर्वाभद्रपदानक्षत्रे प्रथमकरोदकातिसर्गेण पुण्ड्रवर्धननगरविनिर्गतकौशिकगोत्रवाजिकाण्वसब्रह्मचारिदामोदरभट्टसुताय केशवदीक्षिताय रामपुरीसप्तशतान्तर्गतलोहग्रामः सवृक्षमालाकुलः सधान्यहिरण्यादेयः सदण्डदोषदशापराधः सभूतोपात्तप्रत्ययः अचाटभटप्रवेशः शतोत्तरीयो ब्रह्मदायन्यायेनाचन्द्रार्कं नमस्यो दत्तः । यस्य च आघाटाः पूर्वतः घोडेग्रामः, दक्षिणतः वञ्जुलीनामा ग्रामः, पश्चिमतः विश्वविहरङ्ग नामा ग्रामः, उत्तरतः सोन्नहीनामा ग्रामः । एवं चतुराघाटविशुद्धं लोहग्रामं केशवदीक्षितस्य कृषतः कर्षयतो भुञ्जतो भोजयतो वा न केनचिद्व्याघातः कार्यः । मन्दानिलान्दोलितजलतरङ्गतरलमैश्वर्यं श-

१. दक्षिणहैदराबादराज्यान्तर्गतोऽधुना 'मालखेड'नाम्ना प्रसिद्धो ग्राम एव मान्यखेटः.

रदभ्रविभ्रमं जीवितं सामान्यं च भूमिदानफलमवगच्छद्भिरागामिनृपतिभिरस्मद्वंश्यैरन्यैर्वायमस्मद्धर्मदायः समनुमन्तव्यः प्रतिपालनीयश्च । उक्तं च रामभद्रेण—

'सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
सर्वानेवं भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ॥'
षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
स्वदत्तां परदत्तां वा यो हरेत्तु वसुंधराम् ।
श्वविष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते ॥
प्रसृत्या संप्रदानेन दत्तस्याहरणेन च ।
जन्मप्रभृति यद्दत्तं तत्सर्वं निष्फलं भवेत् ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
निवसेद्ब्रह्मणो लोके भूमिदानं ददाति यः ॥

शिवमस्तु सर्वजगतः । ॐ नमः शिवाय ॥

(इण्डियन् आण्टिक्केरी १२ । २४९-२५२)

---

## (७)

## चौलुक्यवंशोद्भवस्य लाटदेशाधिपतेस्त्रिलोचनपालस्य दानपत्रम् ।

ॐ[१] नमो विनायकाय । स्वस्ति जयोऽभ्युदयश्च ।

बाणं वीणाक्षमाले कमलमहिमयो बीजपूरं त्रिशूलं
खट्वाङ्गं दानहस्ताभयकरसहिताः पाणयो धारयन्तः ।
रक्षन्तु व्यञ्जयन्तः सकलरसमयं देवदेवस्य चित्तं
नो चेदेवं कथं वा त्रिभुवनमखिलं पालितं दानवेभ्यः ॥
दधाति पद्मामथ चक्रकौस्तुभे गदामथो शङ्खमिहैव पङ्कजम् ।
हरिः स पातु त्रिदशाधिपो भुवं रसेषु सर्वेषु निपण्णमानसः ॥

---

१. अस्य लेखस्य प्रणेता पण्डितस्त्वपरिणतकवित्व एव कश्चिदासीत्.

कमण्डलुं दण्डमथ स्रुचं विभुर्बिभर्ति मालां जपदत्तमानसः ।
सृजत्यजो लोकमपोहितुं रिपून्रसैश्च सर्वै रसितो विशेषतः ॥
कदाचिद्दैत्यखेदोत्थचिन्तामन्दरमन्थनात् ।
विरिञ्चेश्चुलुकाम्भोधे राजरत्नं पुमानभूत् ॥
देव किं करवाणीति नत्वा प्राह तमेव सः ।
समादिष्टार्थसंसिद्धौ तुष्टः स्रष्टाब्रवीच्च तम् ॥
कन्याकुब्जे महाराज राष्ट्रकूटस्य कन्यकाम् ।
लब्ध्वा सुखाय तस्यां त्वं चौलुक्याप्नुहि संततिम् ॥
इत्थमत्र भवेत्क्षत्रसंततिर्विततता किल ।
चौलुक्यात्प्रथिता नद्याः स्रोतांसीव महीधरात् ॥
तत्रान्वये दयितकीर्तिरकीर्तिनारीं
संस्पर्शभीत इव वर्जितवान्परस्य ।
**बारप्पराज** इति विश्रुतनामधेयो
राजा बभूव भुवि नाशितलोकशोकः ॥
श्रीलाटदेशमधिगम्य कृतानि येन
सत्यानि नीतिवचनानि मुदे जनानाम् ।
तत्रानुरज्य जनमाशु निहत्य शत्रू-
न्कोशस्य वृद्धिफलमाप निरन्तरं यः ॥
तस्माज्जातो विजयवसति**र्गोङ्गिराजः** क्षितीशो
यस्मादन्ये मनुजपतयः शिक्षिता राजधर्मम् ।
यो गोत्रस्य प्रथमनिलयो पालको यः प्रजानां
यः शत्रूणाममितमहसां मूर्ध्नि पादं व्यधत्त ॥
आत्मभूरुद्धृता येन विष्णुनेव महीयसा ।
बलिभिः सा समाक्रान्ता दानवैरिव वैरिभिः ॥

१. 'पुरंदरेण प्रतिपाद्यमानमेवं समाकर्ण्य वचो विरिञ्चिः । संध्याम्बुपूर्णे चुलके मुमोच ध्यानानुविद्धानि विलोचनानि ॥' इत्युपक्रम्य 'अथाविरासीत्सुभटस्त्रिलोकत्रासप्रवीणश्चुलकाद्विधातुः' इत्यन्तं विक्रमाङ्कदेवचरितस्य प्रथमे सर्गे द्रष्टव्यम्. अस्फुटार्थाः श्लोकाश्चात्र कतिचन सन्ति.

प्रद्युम्नवन्मदनरूपधरोऽच्युतस्य
श्रीकीर्तिराजनृपतिः स बभूव तस्मात् ।
यो लाटभूपपदवीमधिगम्य चक्रे
धर्मेण कीर्तिधवलानि दिगन्तराणि ॥
संतानतन्तुषु प्रोताश्चौलुक्यमणयो नृपाः ।
तस्यां तु मणिमालायां नायकः कीर्तिभूपतिः ॥
गोः पिण्डे भौतिके भूरिपदार्थायतने गुरौ ।
सूते क्षीरं शिरा कापि माता स्त्रीषु तथैव तम् ॥
आजन्मदृष्टया(?)तिमनोहरस्य मुदा तथापूर्यत सर्वलोकः ।
यथामृतापूर्णघटीसमानं नारिच्यतापि स्तुतिबिन्दुपातैः ॥
समेऽपि स्पृहणीयत्वे पक्वान्नस्येव योषिताम् ।
भोगस्तेन परस्त्रीणामुच्छिष्टस्येव वर्जितः ॥
लग्नं तथा क्ष्मापतिपाणिपादे स्थितं यथा वक्षसि रत्नसा(हा)रैः ।
गौणं त्यजद्भिः श्रुतिकुण्डलाभ्यां कृत्वा पदं मुख्यमथास्थितं तैः ॥
आलम्बनीभूतमहीधरांस्तानुछङ्घ्य जुष्टं पतनं गुणौघैः ।
कुतोऽन्यथा ते सहजा बभूवुः कथं च ते तत्सहवृद्धिमापुः ॥
स यौवनोन्मत्तगजेन्द्रपार्श्वाद्धावन्मनो मारयदेवमेतत् ।
तस्माद्दते हीन्द्रियखेटकेन विलङ्घिता वैषयिकी न सीमा ॥
कायेन गेहादिनिभेन जीवो व्योमेव जन्तोर्व्यवधीयते स्म ।
तस्मात्परस्मिन्नहमेव मत्वा लक्ष्मीं समां योऽर्थिजनैरभुङ्क्त ॥
बाहू बलौ कोपगुरोश्च वासो वक्षस्तथा नम्रमवेक्ष्य चापम् ।
दर्पोद्धतं मस्तकमेव येषां द्विषां छिनत्ति स्म रणे स वीरः ॥
पृष्ठं ददच्चापमभिद्विषं यः प्रियं चकार द्विषति प्रयुक्ताः ।
लक्षानुगा मार्गणपुंगवास्ते जाताः कृतार्थास्तत एव तस्मात् ॥
तस्यासीदविचारकीर्तिदयिता निस्त्रिंशहस्तस्य या
सङ्ग्रामे सभयेव हन्त सहसागच्छत्परेषां गृहम् ।

सा वाच्यापगमाय तेन दधती दिव्यं प्रतापं पुरो-
क्रान्ता सप्तसमुद्रमण्डलभुवं शुद्धेति गीता सुरैः ॥
तस्माच्च वत्सराजो गुणरत्नमहानिधिर्जातः ।
शूरो युद्धमहार्णवमथनाय मन्दरः ख्यातः ॥
आबाल्यादियमत्र मूर्तिभवने भद्रैः समं श्रीः स्थिता
व्रीडाप्यत्र वधूरिव स्वविषयं प्रच्छादयन्ती सती ।
तामेवाधिकतां नयत्यविरता भर्तुर्मनो जानती
सा विष्णोरिव वत्सराजनृपतेः सापत्नवर्जं स्थिता ॥
सहैकाम्बरदुःस्थत्वे काश्चित्कोणश्रिता दिशः ।
इतीवाच्छादयत्त्यागी वत्सेशः कीर्तिकर्पटैः ॥
हेमरत्नप्रभं छत्रं सोमनाथस्य भूषणम् ।
दीनानाथकृते सत्रमवारितमकारि सः(च) ॥
तस्याङ्गसंभवः श्रीमांस्त्रिलोचनपतिर्नृपः ।
भोक्ता श्रीलाटदेशस्य पाण्डवः कलिभूभुजाम् ॥
त्यागेऽपि मार्गणा यस्य गुणग्रहणगामिनः ।
सत्ये धर्मो धवे वक्रः(?) शौर्ये गोपालविक्रमः ॥
अहो वृद्धस्य तस्यासञ्शात्रवो विकला भृशम् ।
भोक्तुस्तस्यैव ते चित्रं विहारमलशालिनः ॥
शत्रोः संगरभूषणस्य समरे तस्यासिना पातिते
मूर्धन्याशु गलत्सु कण्ठवलयाद्रक्तस्य पूरेष्वलम् ।
तत्तेजोमयवह्नितापितवपुस्तस्यासवर्णस्य त-
न्नूनं भाजनमुल्ललास सहसा खड्गोर्ध्वहस्तं चलम् ॥
धर्मशीलेन तेनेदं चलं वीक्ष्य जगत्रयम् ।
गोभूहिरण्यदानानि दत्तानीह द्विजन्मनाम् ॥
शाके नवशतैर्युक्ते द्विसप्तत्यधिके तथा ।
विकृते वत्सरे पौषे मासे पक्षे च तामसे ॥

---

१. अत्र च्छन्दोभङ्गो भवति.

अमावास्यातिथौ सूर्यपर्वण्यङ्गारवारके ।
गत्वा प्रत्यगुदन्वन्तं तीर्थे चागस्त्यसंज्ञके ॥
गोत्रेण कुशिकायात्र मार्गवाय द्विजन्मने ।
वैश्वामित्रदेवरातावौदलः प्रवरास्त्रयः ॥
इमानुद्वहते ग्रामं माधवाय त्रिलोचनः ।
धिल्लीश्वरपथकान्तर्द्विचत्वारिंशसंख्यके ॥
एरथाणनवशतमदादुदकपूर्वकम् ।
समस्तायं ससीमानमाघाटैस्तरुभिर्युत[म्] ॥
देवब्राह्मणयोर्दायान्वर्जयित्वा क्रमागतान् ।
पूर्वस्यां दिशि नागाम्बा ग्रामस्तन्तिका तथा ॥
वटपद्रकमाग्नेय्यां याम्यां लिङ्गवटः सि(शि)वः ।
इन्दोत्थानं तु नैर्ऋत्यां वहुणदश्वा परे स्थितः ॥
वायव्यां टेम्बरूकं च सौम्यां तु तलपद्रकम् ।
ईशान्यां कुरुणग्रामः सीमायां खेटकाट्टकम् ॥
आघाटनानि चत्वारि आयैः सह ससीमकैः ।
तस्माद्द्विजवरस्यास्य भुञ्जतो न विकल्पना ॥
कर्तव्या कैश्चन नरैः सार्थसाधुसमाख्यकैः ।
अथैवं यदि लोप्तास्य स तदा पापभाजनः(नम्) ।
पालने हि परो धर्मो हरणे पातकं महत् ॥

तथा चोक्तम्—

'सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
स्ववंशजो वा परवंशजो वा रामो बत प्रार्थयते महीशाः ॥
कन्यामेकां गवामेकां भूमेरर्धार्धमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंछवम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्धर्मार्थकामादियशस्कराणि ।
निर्माल्यवान्ति प्रतिमानि तानि को नाम साधुः पुनराददाति ॥

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥''

लिखितं मया महासांधिविग्रहिकश्रीशंकरेण । मन्नतश्रीमिति ।श्रीत्रिलोचनपालस्य ॥

( इण्डियन् आण्टिकेरी १२।२०१–२०३ )

---

## (८)

## श्रीधरणीवराहाख्यमहीपतेर्दानपत्रम् ।

ॐ ।

पुण्यं व्योमसरिज्जलेन वहता चन्द्रांशुभिः शीतलं
सत्पुष्पं कनकारविन्दनिचयैर्[1]निर्वाणसंपत्फलम् ।
व्यालालीविषकन्दलीमृगपतिभ्रान्तं न संतापदं
श्रीधन्धेश्वरमूर्ध्नि[2]·······सुखदं वस्ताज्जटाकाननम् ॥

ध्यानात्पूर्वमुवाच सम्प्रतिरवं शंभुं प्रणम्यावनी
ध्यानाध्यासितलोचने त्वयि विभो पीडामहं नासुरीम् ।
शक्ता सोढुमिलार्थमुद्गतवपू रक्षाक्षमः शक्तिमा-
न्स्वाच्चापात्परमेश्वरेण विहितश्चापाभिधानो नृपः ॥

अपि च ।

नीरन्ध्रो गतकण्टकोऽक्षततनुः सच्छायमूर्तिः सदा
सत्पत्रोऽपि विपत्रतामनुगतः सेव्योऽस्त्यगम्यो द्विषाम् ।
शश्वत्सौख्यफलप्रदोऽपि सुतरां वृद्धेर्विधातात्मनो
भूभृन्मूर्ध्नि कृतास्पदोऽपि नतिमाञ्श्रीचापवंशोऽपरः ॥

तस्मिन्नुष्णरुचेर्बभूव सदृशः श्रीविक्रमार्को नृपः
संपन्नाखिलशक्तिषड्गुणयुतो राजा ततोऽप्यड्डकः ।

---

१. 'निचयो' इति 'इण्डियन् आण्टिकेरी'धृतः पाठः. २. 'इण्डियन् आण्टिकेरी'-मध्ये त्रुटिचिह्नं नास्ति.

तस्माच्छ्रीपुलकेसिभूभृदजनि क्ष्मापालचूडामणिः
संजातः पृथिवीपतिर्ध्रुवभटो धर्मस्य मूर्तिस्ततः ॥

तस्यानुजः सकलभूपनताङ्घ्रिपद्मः
पद्मावपुष्यभिरतो धरणीवराहः।
जातोऽखिलप्रणयिकल्पतरुर्महात्मा
लीलावतीमुखसरोरुहराजहंसः ॥

किं शौर्यं प्रभुता पराभिहननं गम्भीरता सत्यता
प्रोत्साहः किमुतोच्यतामसदृशो यस्य प्रतापो महान्।
औदार्यं कुलजावनीपतिसुतेष्वत्यादरः कोऽप्यसौ
येनैवं मुहुरेति मोहममला कष्टं कवीनां मतिः ॥

यस्त्यागशौर्यसौभाग्यगर्वितः कर्णपार्थकुसुमशरान्।
ह्रेपयतीवाधिकतरनिजचरितैर्लीलयैव नृपः ॥

अयं च प्राप्ताचलश्रीरपि सहजविवेकादेवमभावयत्। चत्वरनिहितानिलाहतदीपशिखासमानमायुरारोग्यादिकम्। यत्पश्य, तादृग्बलसमन्विता अप्यस्मदादिपूर्ववंशजास्तथाविधविधिविलसितविशेषात्कीर्तियशोनाममात्रावशेषीभूताः समभवन्। तद्वरं धर्मविषयमेव मनो विहितम्। दानशीलतपोभावनात्मके च धर्मे प्रायो राज्यावस्थितनृपाणां दानभावने एव प्रवर्तिते। तद्वसुंधरादिदानं स्वर्गसोपानमाकलय्यामितगुणभाजानेन वर्धमानावस्थितेन समधिगताशेषमहाशब्दमहासामन्ताधिपतिश्रीधरणीवराहेण स्वपितामहनामाङ्कितमड्डाणकदेशमन्यं च भूयांसं राजाधिराजपरमेश्वरश्रीमहीपालदेवपादप्रसादतः समनुशासता सता यथा दानं प्रवर्तितं तथासौ सर्वान्स्वसंबध्यमानभाविभूपानन्यांश्च राष्ट्रपतिग्रामपतिभोगिकमहत्तरकुटुम्बिकपाश्वकुलिकदण्डपासिकमध्यगप्रभृतीन्समनुबोधयति—

१. अन्यलेखेषु 'पुलकेशि' इति तालव्यान्तमुपलभ्यते. २. 'पुराभिहणनं' इति 'इण्डियन् आण्टिक्वेरी'धृतः पाठः. ३. गुजरातप्रान्ते 'वढवाण'नाम्ना प्रसिद्धं नगरमेव 'वर्धमानम्'. ४. 'दण्डपाशिक' इत्यन्यत्र तालव्यमध्यः समुपलभ्यते.

अस्तु वः संविदितम् । यथा—मया मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये तथैवामुष्मिकफलावाप्त्यर्थं श्रीमदामर्दकसंतानीयश्रीशिवदेवाचार्यसुतश्रीमहेश्वराचार्याय विद्याधनं कन्थिकास्थलीसंबध्यमानः विङ्कलाभिधानग्रामः स्वसीमापर्यन्तः सदाणीभोगभागः सदण्डदशापराधः सवृक्षमालाकुलः सकलराजकीयानामहस्तप्रक्षेपणीयः अपरिपन्थनीयश्च प्राप्तोदगयनमहापर्वणि परमभक्त्या मया उदकातिसर्गेण प्रतिपादितः । यस्य चाघाटनानि पूर्वतः उत्तरक्ककाभिधानग्रामः । दक्षिणतः खिक्खिरिआणकाभिधानग्रामः। अपरतः कुरलाभिधानग्रामः । उत्तरतः शणाइचाणकाभिधानग्रामः । एवं चतुराघाटनोपलक्षितोऽयं विङ्कलाभिधानग्रामः सोत्पद्यमानवेष्टिकः अचाटभटप्रवेशः पूर्वदत्तदेवदायब्रह्मदायवर्जं भूमिच्छिद्रन्यायेनाचन्द्रार्कार्णवक्षितिसरित्पर्वतकालीनः श्रीमहेश्वराचार्यस्य पुत्रपौत्रान्वयन्यायेन भुञ्जतो भोजयतो वा न केनचिद्व्यासेधनीयः । यत उक्तमेव भगवता वेदव्यासेन व्यासेन—

'बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्य वान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥' इति ।

शकसंवत् ८३६[1] पौषसुदि ४ उत्तरायणे । यथा चैतदेवं तथा ग्रामं दाता स्वहस्तमारोपयति । स्वहस्तोऽयं श्रीधरणीवराहस्य । लिखितं चैतद्राजादेशात्सांधिविग्रहिकमहिन्दकेन पार्थिलसुतेनेति ।

(इण्डियन् आण्टिक्केरी १२ । १९३–१९४)

---

१. अयं शकाङ्कस्तत्र लेखे संदिग्ध एवास्ति. अस्माभिस्तु 'आण्टिकेरी'पुस्तके एतल्लेखप्रकाशकस्य डॉक्टरबूलरस्य निर्णयानुसारं स्थापितः.

# (९)

## राष्ट्रकूटवंशोद्भवस्य द्वितीयकर्कराजस्य दानपत्रम्।

ॐ स्वस्ति।

श्रीसरस्वत्युमालक्ष्मीसंश्लेषभूषितम्।
भूतये भवतां भूयाज्जगत्कल्पतरुत्रयम्॥
ब्रह्माद्यामरवन्द्यधूर्जटिजटाजूटाटवीसंस्थितैः
सिक्ताद्देवनदीविशुद्धसलिलैर्यश्चन्द्रखण्डादभूत्।
आश्चर्योर्जितवृत्तजातमहिमा पालीध्वजोत्पल्लवो
वंशः कुन्दसितातपत्रबहलच्छायासु वृद्धिं गतः॥
तस्मादिन्दुरिवाम्बुधेः शशभृतः कान्तिप्रवाहस्ततो
निष्यन्दश्च यथामृतस्य समभूद्धन्यो यदोरन्वयः।
रेमेऽत्यद्भुतसाहसः स भगवान्गोपीकटाक्षालिभिः
शार्ङ्गी यत्र निपीयमानविलसल्लावण्यपुष्पोद्गमः॥
प्रतिबोधितबन्धुपद्मषण्डः कृतचालुक्यघनान्धकारनाशः।
उदगादथ दन्तिदुर्गधाम्नुर्यदुवंशोदयपर्वतात्प्रतापी॥
तस्मिन्नपुत्रेऽनु च तत्पितृव्यः पतिर्भुवोऽभूदिह कृष्णराजः।
अष्टादशैशालयदृश्यरूपं पुञ्जीकृतं येन यशो विशुद्धम्॥
गोविन्दराजः क्षितिपश्च तस्मादभूदनेकाहवलब्धकीर्तिः।
धर्मार्थयोर्येन फलं मनोभूरा तृषितः कोशवतोपभुक्तः॥
अतिशयगुणयुक्तश्लाघ्यथार्थाभिधानो
निरुपम इति तस्यैवानुजोऽभूत्क्षितीशः।
सकलजलधिवेलाप्रान्तविश्रान्तसैन्यः
परिणतभुवनत्वाद्गुप्तैकातपत्रः॥
तस्माज्जगत्तुङ्गनृपः सुतोऽभूत्तुङ्गत्वमागाज्जगतां गुणैर्यः।
यस्यानिशं गन्धमदेभभीता मदं प्रयाणे दिगिभास्त्यजन्ति॥

---

१. काव्यमालायां मुद्रिते षष्ठे लेखे 'तस्यावं नृपतेः' इत्यादि पञ्चमे श्लोके 'पितृव्य-मुदयी' इत्यस्य स्थाने 'पितृव्य उदयी' इति पाठः समीचीनः.

तस्य श्रीमदमोघवर्षनृपतिश्चालुक्यकालानलः
सूनुर्भूपतिरूर्जिताहितवधूवैधव्यदीक्षागुरुः ।
आसीदिन्द्रपुराधिकं पुरमिदं श्रीमान्यखेटाभिधं
येनेदं च सरः कृतं गुरुकरुप्रासादमन्तःपुरम् ॥
तस्मादकालवर्षोऽभूत्सार्वभौमः क्षितीश्वरः ।
यत्प्रतापपरित्रस्तो व्योम्नि चन्द्रायते रविः ॥
चेदीशो [1]दशकण्ठदर्पदलनः श्रीहैहयानां कुले
कोक्कल्लः समभूच्च तस्य तनया या संकुकस्यानुजा ।
तस्यां कृष्णनृपात्ततः श्रितमहादेवीपदायामभू-
त्तैस्तैर्यः प्रथितो गुणैर्भुवि जगत्तुङ्गाभिधानः सुतः ॥
चेदीश्वरशंकरगणदुहितरि लक्ष्म्यां ततो [2]जगत्तुङ्गात् ।
सूनुरभूदिन्द्रनृपो भावी राज्यश्रियो भर्ता ॥
जनकगृहीतैः परमण्डलैरसंतुष्टमानसः स्वपितुः ।
एकच्छत्रां पृथ्वीं कर्तुं निरगाज्जगत्तुङ्गः ॥
चेद्यां मातुलशंकरगणात्मजायामभूज्जगत्तुङ्गात् ।
श्रीमानमोघवर्षो गोविन्दाम्बाभिधानायाम् ॥
आरुह्येन्द्रपदोपमं स नृपतिः श्रीवीरसिंहासनं
दत्त्वा ताम्रनमस्यशासनगतान्ग्रामाननन्तांस्तथा ।
अर्थैरर्थिमनोरथाधिकतरैः कृत्वा कृतार्थं जग-
द्व्याप्ता येन शिवालयैर्निजयशःपुञ्जोपमैर्मेदिनी ॥
[3]ऐन्द्रपदजिगीषयेव स्वर्गमधिरूढे च ज्येष्ठे भ्रातरि श्रीमत्कृष्णराजदेवे
युवराजदेवदुहितरि कुण्डकदेव्याममोघवर्षनृपात् ।
जातः खोट्टिगदेवो नृपतिरभूद्भुवनविख्यातः ॥

१. 'दशकण्ठदर्पदलनश्रीहैहयानां' इति समस्तः पाठो युक्तः. २. चेदिदेशाधीशशंकरगणस्य दुहितरि लक्ष्म्यां गोविन्दाम्बायां च जगत्तुङ्गनृपात्क्रमेणेन्द्रः, अमोघवर्षश्चेति पुत्रद्वयमुदभूत्. अमोघवर्षात्कृष्णः, खोट्टिगः, निरुपमश्चेति त्रयः पुत्रा बभूवुः. भाण्डारकरपण्डितास्तु दक्षिणेतिहासे 'गोविन्दोऽम्बाभिधानायाम्' इति पाठं समुचितं वदन्ति. ३. 'इण्डियन् आण्टिक्केरी'मध्ये फ्लीटपण्डितेन एतद्द्वयमप्यग्रिमायामार्यायां प्रवेशितम्. तथैव दक्षिणेतिहासेऽपि.

तस्यानुजान्निरुपमादुपलब्धजन्मा
वीरश्रियः पदमभूदिति कक्कराजः।
यो बाल एव सकलामपि राजनीति-
मात्मप्रबोधविभवातिशयाद्विवेद ॥
सौमालीति स्त्रियां गुणीति विदुषां त्यागीति दीनार्थिनां
क्रोधीति द्विषतां शमीति च सतां रूपीति सद्योपिताम्।
मित्राणां सुहृदित्यवन्ध्यविभवो विश्वंभरायाः पतिः
सर्वेषामपि सर्वदेति निवसत्येकोऽपि यश्चेतसि ॥
यस्यास्ते करवालवारिणि चिरं प्रक्षालयन्ती यथा
लक्ष्मीरात्मकलङ्कमाहितमलं निन्द्यैः कुभूपाश्रयैः।
सत्यं श्रीगृहमेतदम्बुजमितो मे द्वेषिणी माप्यत-
स्तिष्ठाम्यत्र रमेति यस्य न मुखे देवी सरस्वत्यपि ॥
सत्यं गुर्जरनिर्जितारिनिकरश्चोलादिलीलारतो
हूणार्थीशरणेष्वकम्पितमतिः पाण्ड्यप्रचण्डो नृपः।
वन्ध्योऽयं भवतामनिन्द्यचरितः स्पर्धन्त मा स्मामुना
कीर्तिर्यस्य नियामिकेवमनिशं पृथ्वीं परिभ्राम्यति ॥
त्यागेनैव परां प्रसिद्धिमगमत्कर्णः किलानश्वरीं
सत्येनात्र युधिष्ठिरोऽपि नृपतिः प्रख्यातकीर्तिः कृतः।
सौन्दर्येण मनोभवश्च विदितः पार्थो धनुःकौशलै-
र्यः सर्वानतिशेत एव भुवने देवः समस्तैर्गुणैः ॥

यश्चानुरतकनकधारानिपातोपजनितलोकहर्षः श्रीमदमोघवर्षः स्वकौशलक्षितिनिशितास्त्रविदारितारातिसार्थः श्रीनूतनपार्थः सकलबलवदरितिमिरभेदनप्रचण्डः श्रीमदहितमार्तण्डः स्वविक्रमच्छलितबलिवन्यपरायणः श्रीवीरनारायणः सकलादिराजचरितातिशयतुङ्गः श्रीमान्नृपतुङ्गो निखिलभुवनाधिपत्यप्रकाशितैकातपत्रः श्रीराजत्रिनेत्रः समभवत्सदर्थाभिधानतया

---

१. 'अवन्ध्य' इति 'इण्डियन् आण्टिकेरी'मुद्रितः पाठः.

स च परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमदकालवर्षदेवपादानुध्यातः परमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरश्रीमदमोघवर्षदेवः पृथिवीवल्लभः श्रीमद्वल्लभनरेन्द्रदेवः कुशली सर्वानेव यथासंबध्यमानकान्राष्ट्रपतिविषयपतिग्रामकूटमहत्तरायुक्तकोपयुक्तकाधिकारिकान्समादिशति—अस्तु वः संविदितम्, यथा श्रीमान्यखेटस्थिरावासिते श्रीमत्कक्कलदेवराजे शकनृपकालातीतसंवत्सरशतेष्वष्टसु चतुर्नवत्यधिकेष्वङ्कतः संवत् ८९४ अङ्गिरःसंवत्सरान्तर्गताश्वयुजपौर्णमास्यायां(स्यां) बुधदिने सोमग्रहणमहापर्वणि मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये श्रीमद्वेजुचवावीवास्तव्याय इहैव कार्याभ्यागताय भारद्वाजगोत्रबहृचशाखासब्रह्मचारिणे त्रिप्रवराय श्रीमच्छंकरैयपुत्राय श्रीमत्सङ्गमैयसुताय श्रीमच्छन्नपैयभट्टाय उप्पलिकाशतत्रयान्तर्गतबब्बुलतल्लद्वादशमध्ये पङ्गरिकानाम ग्रामः सवृक्षमालाकुलः सधान्यहिरण्यादेयः सदण्डदोषदशापराधः पूर्वप्रसिद्धचतुःसीमापर्यन्तः शुल्कादिसमस्तोत्पत्तिसहितः आ चन्द्रार्कं मया नमस्यो दत्तः । तस्य पूर्वतः रोहीतल्लग्रामः । दक्षिणतः शिलहरेग्रामः । पश्चिमतः किणिहिग्रामः । उत्तरतः अन्तरवल्लीग्रामः । एवं चतुराघाटविशुद्धममुं पङ्गरिकाग्रामं श्रीमच्छन्नपैयभट्टस्य कृषतः कर्षयतो भुञ्जतो भोजयतो वा न केनाचिद्व्याघातः कार्यः । यश्च करोति स पञ्चभिरपि महापातकैरुपपातकैश्च संयुक्तः स्यात् । उक्तं च—

'सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ॥'
'यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥'
'बहुभिर्वसुधा भुक्ता पार्थिवैः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥'
'विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णाहयो हि जायन्ते भूमिदानापहारिणः ॥'

'षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥'
'सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम्।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम्॥'
'मद्वंशजाः परमहीपतिवंशजा वा
पापादपेतमनसो भुवि भाविभूपाः।
ये पालयन्ति मम धर्ममिदं समस्तं
तेषां मया विरचितोऽञ्जलिरेप मूर्ध्नि॥'

श्रीमदम्बार्यपौत्रेण योगमार्यसुतेन च। कायस्थकुमुदभागिना लिखितं पुन्नार्यनाम्ना॥

(इण्डियन् आण्टिक्वेरी १२।२६४-६७)

---

## (१०)

## राणासमरसिंहस्य प्रशस्तिः।

ओम्।

ॐ नमः शिवाय।

ध्यानानन्दपराः सुराः कति कति ब्रह्मादयोऽपि स्वसं-
वेद्यं यस्य महः स्वभावविशदं किंचिद्विदांकुर्वते।
मायामुक्तवपुः स्वसंगतभवाभावप्रदः प्रीतितो
लोकानामचलेश्वरः स दिशतु श्रेयः प्रभुः प्रत्यहम्॥
सर्गार्थे स्वतनुं हुताशमनिशं पद्मासने जुह्वतः
प्राणैः प्राजनि नीललोहितवपुर्यो विश्वमूर्तेः पुरा।
दुष्टाङ्गुष्ठनखाङ्कुरेण हठतस्तेजोमयं पञ्चमं
छिन्नं धातृशिरः कराम्बुजतले बिभ्रत्स वस्त्रायताम्॥

---

१. प्रशस्तिरियमर्बुदाचलो(आबूपहाड)परि श्रीमदचलेश्वरमहादेवमन्दिरसमीपस्थसंन्यासिमठे शिलायां समुत्कीर्णा वर्तते. वर्णिताश्चात्रोदयपुरमहीपतेः पूर्वपुरुषाः.

अव्यक्ताक्षरनिर्भरध्वनिजपस्त्यक्तान्यकर्मश्रमः
स्वं देहात्सितिमानमुज्झितुमना दानाम्बुसंवर्धितः ।
यत्कुम्भाचलगस्तपांसि वितनोत्यद्यापि भृङ्गव्रजः
प्रत्यूहापगमोन्नतिर्गजमुखो देवः स वोऽस्तु श्रिये ॥

किं च ।

क्षुभ्यद्वारिधिदीर्यमाणशिखरिश्रेणि भ्रमद्भूतलं
त्रुय्यद्व्योमदिगन्तसंहति पतद्ब्रह्माण्डभाण्डस्थिति ।
कल्पान्तस्य विपर्ययेऽपि जगतामुद्वेगमुच्चैर्दिशा-
त्सिन्धोर्लङ्घनमद्भुतं हनुमतः पायादपायात्स नः ॥

शाखोपशाखाकुलितः सुपर्वा गुणोचितः पत्रविभूषिताङ्गः ।
कृतास्पदो मूर्धनि भूधराणां जयत्युदारो गुहिलस्य वंशः ॥

यद्वंशो गुहिलस्य राजभगवन्नारायणः कीर्त्यते
तत्सत्यं कथमन्यथा नृपतयस्तं संश्रयन्तेतराम् ।
मुक्तेः कल्पितवेतसः करतलव्यासक्तदण्डोज्ज्वलाः
प्राणत्राणधियः श्रियः समुदयैर्न्यस्तापहस्ताः सदा ॥

मेदःक्लेदभरेण दुर्जनजनस्याप्लावितः संगरे
देशः क्लेशकथापकर्षणपटुर्यो बप्पकेनोच्चकैः ।
लावण्योत्करनिर्जितामरपुरः श्रीमेदपाटाभिधा-
माधत्ते स्म स एष शेषनगरश्रीगर्वसर्वंकषः ॥

अस्ति नागह्रदं नाम सायाममिह पत्तनम् ।
चक्रे तपांसि हारीतराशिर्यत्र तपोधनः ॥

केऽपि क्वापि परप्रभावजनितैः पुण्यैर्हविर्भिर्विभुं
प्रीणन्ति ज्वलनं हिताय जगतां प्रारब्धयागक्रमाः ।
अन्ये प्राणनिरोधबोधितसुखाः पश्यन्ति चात्मस्थितं
विश्वं सद्विजनस्थलीषु मुनयो यत्राप्ततत्त्वोदयाः ॥

---

१. यस्याधुना 'मेवाड'नाम्ना प्रसिद्धिः. 'भिन्दानाः सान्द्रमानग्रहपटिममदं मेदपाटाङ्गनानाम्' इति कर्णसुन्दर्यां (१।५०) बिह्लणप्रयोगः. २. अधुना 'नागदा'नाम्ना प्रसिद्धः.

अस्मिन्नेव वने तपस्विनि जने प्रायःस्खलद्बन्धने
वृत्तान्तं भुवनस्य योगनियतः प्रत्यक्षतः पश्यति ।
हारीतः शिवसङ्गसङ्गविगमात्प्राप्तः स्वसेवाकृते
[1]बप्पाय प्रथिताय सिद्धिनिलयो राज्यश्रियं दत्तवान् ॥

हारीतात्किल बप्पकोऽ[2]ङ्घ्रिवलयव्याजेन लेभे महः
क्षात्रं धातृनिभाद्वितीर्य मुनये ब्राह्मं स्वसेवाछलात् ।
एतेऽद्यापि महीभुजः क्षितितले तद्वंशसंभूतयः
शोभन्ते सुतरामुपात्तवपुषः क्षात्रा हि धर्मा इव ॥

बप्पकस्य तनयो नयवेत्ता संबभूव नृपतिर्गुहि[3]लाख्यः ।
यस्य नामकलितां किल जातिं भूभुजो दधति तत्कुलजाताः ॥

[4]यैः पीयूषमयूखसुन्दरमतिर्विद्यासुधालंकृति-
र्निष्प्रत्यूहविनिर्जितस्मरगतिः प्राकाम्यरम्याकृतिः ।
गाम्भीर्योन्नतिसंभृतस्य जलधेर्विस्फोटिताहंकृति-
स्तस्माद्भोजनरेश्वरः स समभूत्संसेवितश्रीपतिः ॥

शीलः सशीलकरवालकरालपाणि-
र्भेजे भुजेन तदनु प्रतिपक्षलक्ष्मीम् ।
उत्साहभावगमकं पुलकं दधानो
वीरः स्वयं रस इव स्फुटबद्धदेहः ॥

चोडस्त्रीरतिखण्डनः कुलनृपश्रेणीशिरोमण्डनः
कर्णाटेश्वरदण्डनः प्रभुकलामैत्रीमनोनन्दनः ।
तत्सूनुर्नयमर्मनर्मसचिवः श्रीकालभोजः क्षमा-
पालः कालकरालकर्कशधनुर्दण्डप्रचण्डोऽजनि ॥

छायाभिर्वनिताः फलैः सुमनसः सत्पत्रपुञ्जैर्दिशः
शाखाभिर्द्विजवर्गमर्गलभुजः कुर्वन्मुदामास्पदम् ।

---

१. 'बापारावल' नाम्नास्य सर्वत्रेतिहासेषु प्रसिद्धिः. २. 'ऽंह्रि' इति मुद्रितः पाठः.
'गुहिलोत' नाम्ना तद्वंशोद्भवानां प्रसिद्धिः. ४. 'यत्' इति मुद्रितः पाठः.

तद्वंशप्रबलाङ्कुरोऽतिरुचिरः प्रादुर्बभूवावनी-
पालो भर्तृभटस्त्रिविष्टपतरोर्गर्वाभिहर्ता ततः ॥
मुष्टिप्रमेयमध्यः कपाटवक्षस्थलस्तदनु ।
सिंहस्त्रासितभूधरमत्तेभो भूपतिर्जयति ॥
तज्जन्मा स **महायिकः**[1] स्वभुजयोः प्रासैकसाहायकः
क्षोणीभारमुदारमुन्नतशिरा धत्ते स्म भोगीश्वरः ।
यत्क्रोधानलविस्फुलिङ्गमहसि प्रत्यर्थिनोऽनर्थिनः
प्राग्वत्पक्षपरिग्रहा[2]कुलधियः पेतुः पतङ्गा इव ॥
**खुँम्माणस्य**[3] ततः प्रयाणवियति क्षोणीरजोदुर्दिने
निस्त्रिंशाम्बुधरः सिषेच[4] सुभटान्धाराजलैरुज्ज्वलैः ।
तन्नारीकुचकुङ्कुमानि जगलुश्चित्राणि नेत्राञ्जनै-
रित्याश्चर्यमहो मनःसु[5] सुधियामद्यापि विस्फूर्जति ॥
**अल्लटो**ऽजनि ततः क्षितिपालः संगरेऽनुकृतदुर्जयकालः ।
यस्य वैरिघ्नतनां करवालः क्रीडयैव जयति स्म करालः ॥
उदयति स्म ततो **नरवाहनः** समिति संहृतभूपतिवाहनः ।
विनयसंचयसेवितशंकरः सकलवैरिजनस्य भयंकरः ॥
विक्रमविधूतविश्वप्रतिभटनीतेस्तथा गुणस्फीतेः ।
कीर्तिस्तारकजैत्री **शक्तिकुमारस्य** संजज्ञे ॥
आसीत्ततो नरपतिः **शुचिवर्म**नामा
युद्धप्रदेशरिपुदर्शित[6]चण्डधामा ।
उच्चैर्महीधरशिरःसु निवेशिताङ्घ्रिः[7]
शंभोर्विशाख इव विक्रमसंभृतश्रीः ॥
स्वर्लोके शुचिवर्मणि स्वसुकृतैः पौरंदरं विभ्रमं
बिभ्राणे कलकण्ठकिंनरवधूसंगीतदोर्विक्रमे ।

---

१. 'साहायिकः' इति मुद्रितः पाठः. २. 'परीग्रहा' इति मुद्रितः पाठः. ३. 'धुंमाणस्य' इति मुद्रितः पाठः. ४. 'शिषेच' इति मुद्रितः पाठः. ५. 'मनस्तु' इति मुद्रितः पाठः. ६. 'रिपुरर्दाशत' इति मुद्रितः पाठः. ७. 'निवेशितांह्रिः' इति मुद्रितः पाठः.

माद्यन्मारविकारवैरितरुणीगण्डस्थलीपाण्डुरै-
ब्रह्माण्डं नरवर्मणा धवलितं शुभ्रैर्यशोभिस्ततः ॥
जाते सुरस्त्रीपरिरम्भसौख्यसमुत्सुके श्रीनरवर्मदेवे ।
ररक्ष भूमीमथ कीर्तिवर्मा नरेश्वरः शक्रसमानधर्मा ॥
कामक्षामनिकामतापिनि तप(?)ऽमुष्मिन्नृपे रागिणि
स्वःसिन्धोर्जलसंप्लुते रमयति स्वर्लोकवामभ्रुवः ।
दोर्दण्डद्वयभग्नवैरिवसतिः क्षोणीश्वरो वैरट-
श्चक्रे विक्रमतः स्वपीठविलुठन्मूर्धश्रिरं द्वेषिणः ॥
तस्मिन्नुपरते राज्ञि मुदिताशेषविद्विषि ।
वैरिसिंहस्ततश्चक्रे निजं नामार्थवद्भुवि ॥
व्यूढोरस्कस्तनुर्मध्ये क्ष्वेडाकम्पितभूधरः[1] ।
विजयोपपदः सिंहस्ततोऽरिकरिणोऽवधीत् ॥
यन्मुक्तं हृदयाङ्गरागसहितं गौरत्वमेतद्द्विष-
न्नारीभिर्विरहात्ततोऽपि समभूत्किं कर्णिकारक्रमः ।
धत्ते यत्कुसुमं तदीयमुचितं रक्तत्वमभ्यन्तरे[2]
बाह्ये पिञ्जरतां च कारणगुणग्रामोपमं वर्णनम् ॥
ततः प्रतापानलदग्धवैरिक्षितीशधूमोत्थमषीरसेन[3] ।
नृपोऽरिसिंहः सकलासु दिक्षु लिलेख वीरः स्वयशःप्रशस्तिम् ॥
लोचनेषु सुमनस्तरुणीनामञ्जनानि दिशता यदनेन ।
वारिकल्पितमहो बत चित्रं कज्जलं हृतमरातिवधूनाम् ॥
नृपोत्तमाङ्गोपलकान्तिकूटप्रकाशिताष्टापदपादपीठः ।
अभूदमुष्मादथ चोडनामा नरेश्वरः सूर्यसमानधामा ॥
कुम्भिकुम्भविलुठत्करवालः संगरे विमुखनिर्मितकालः ।
तस्य सूनुरथ विक्रमसिंहो वैरिविक्रमकथां निरमाइत् (?) ॥

---

१. क्ष्वेडा सिंहनादः. २. 'माभ्यन्तरे' इति मुद्रितः पाठः. ३. 'धूमोच्छमषीरसेन' इति मुद्रितः पाठः.

भुजवीर्यविलासेन समस्तोद्धृतकण्टकः।
चक्रे भुवि ततः क्षेम क्षेमसिंहो नरेश्वरः॥

रक्तं किंचिन्निपीय प्रमदपरिलसत्पादविन्यासमुग्धाः
कान्तेभ्यः प्रेतवध्वो ददति रसभरोद्गारमुद्राकपालैः।
पायंपायं तदुच्चैर्मुदितसहचरीहस्तविन्यस्तपात्रं
प्रीतास्ते ते पिशाचाः समरभुवि यशो यस्य संव्याहरन्ति॥

सामन्तसिंहनामा कामाधिकसर्वसुन्दरशरीरः।
भूपालोऽजनि तस्मादपहृतसामन्तसर्वस्वः॥

खोमाणसंततिवियोगविलक्षलक्ष्मीं
सेनामदृष्टविरहां गुहिलान्वयस्य।
राजन्वतीं वसुमतीमकरोत्कुमार-
सिंहस्ततो रिपुगतामपहृत्य भूयः॥

नामापि यस्य जिष्णोः परबलमथनेन सान्वयं जज्ञे।
विक्रमविनीतशत्रुर्नृपतिरभून्मथनसिंहोऽथ॥

कोशस्थितिः प्रतिभटक्षतजं न भुङ्क्ते
कोशं न वैरिरुधिराणि निपीयमानः।
सङ्ग्रामसीमनि पुनः परिरभ्य यस्य
पाणिं द्विसंश्रयमवाप फलं कृपाणः॥

शेषनिःशेषसारेण पद्मसिंहेन भूभुजा।
मेदपाटमही पश्चात्पालिता लालितापि च॥

व्यादीर्णवैरिमदसिन्धुरकुम्भकूट-
निश्च्युतमौक्तिकमणिस्फुटवर्णभाजः।
युद्धप्रदेशफलिकासु समुल्लिलेख
विद्वानयं स्वभुजवीर्यरसप्रबन्धान्॥

१. 'घोमाण' इति मुद्रितः पाठः. २. 'कृपाणः' इति मुद्रितः पाठः. ३. 'निश्चुत' इति मुद्रितः पाठः.

नड्डूलमूलंकषबाहुलक्ष्मीस्तुरुष्कसैन्यार्णवकुम्भयोनिः ।
अस्मिन्पुराधीशसहासनस्थे ररक्ष भूमीमथ जैत्रसिंहः ॥
अद्यापि सैंधककचमूरुधिरावमत्त-
संचूर्णमानरमणीपरिरम्भणेन ।
आनन्दमन्दमनसः समरे पिशाचाः
श्रीजैत्रसिंहभुजविक्रममुद्गृणन्ति ॥
धवलयति स्म यशोभिः पुण्यैर्भूमण्डलं तदनु ।
विहिताहितभ्रंशशङ्कस्तेजःसिंहो निरातङ्कः ॥
उप्तं मौक्तिकबीजमुत्तमभुवि त्यागस्य दानाम्बुभिः
सिक्त्वा सद्गुरुसाधनेन नितरामादाय पुण्यं फलम् ।
राज्ञानेन कृपाणकोटिमटता स्वैरं विगाह्य श्रियः
पश्चात्केऽपि विवर्धिता दिशि दिशि स्फारा यशोराशयः ॥
आद्यक्रोडवपुः कृपाणविलसद्दंष्ट्राङ्कुरो यः क्षणा-
न्मग्नामुद्धरति स्म गूर्जरमहीमुच्चैस्तुरुष्कार्णवात् ।
तेजःसिंहसुतः स एष समरः क्षोणीश्वरग्रामणी-
राधत्ते बलिकर्णयोर्धुरमिलागोले वदान्योऽधुना ॥
तालीभिः स्फुटतूर्यतालरचनासंजीवनीभिः कर-
द्वन्द्वोपात्तकबन्धमुग्धशिरसः संनर्तयन्तः प्रियाः ।
अद्याप्युन्मदराक्षसास्तव यशःखण्डप्रशस्तिं रणे
गायन्ति प्रतिपक्षशोणितमदास्तेजस्विसिंहात्मज ॥
अप्रमेयगुणगुम्फकोटिभिर्गाढबद्धवृषविग्रहाकृतेः ।
कीर्त्यते न सकला तव स्तुतिर्ग्रन्थगौरवभयान्नरेश्वर ॥
अर्बुदो विजयते गिरिरुच्चैर्देवसेवितकुलाचलरत्नम् ।
यत्र षोडशविकारविपाकैरुज्झितोऽकृत तपांसि वसिष्ठः ॥

१. 'भ्रष' इति मुद्रितः पाठः. २. 'कृषाण' इति मुद्रितः पाठः. ३. 'कृषाण' इति मुद्रितः पाठः. ४. भूमण्डले. ५. 'प्युन्नद' इति मुद्रितः पाठः. ६. 'यशःखण्डं प्रतिष्ठं' इति मुद्रितः पाठः.

क्लेशावेशविमुग्धदान्तजनयोः सद्भुक्तिमुक्तिप्रदे
लक्ष्मीवेश्मनि पुण्यजह्नुतनयासंसर्गपूतात्मनि।
प्राप प्रागचलेश्वरत्वमचले यस्मिन्भवानीपति-
र्विश्वव्याप्तिविभाव्यसर्वगतया देवश्चलोऽपि प्रभुः॥
सर्वसौन्दर्यसारस्य कोऽपि पुञ्ज इवाद्भुतः।
अयं यत्र मठस्तिष्ठत्यनादिस्तापसोचितः॥
यत्र क्वापि तपस्विनः सुचरिताः कुत्रापि मर्त्याः क्वचि-
द्गीर्वाणाः परमात्मनिर्वृतिमिव प्राप्ताः क्षणेषु त्रिषु।
यस्याद्योन्नतिमर्बुदेन सहितां गायन्ति पौराणिकाः
संधत्ते स खलु क्षणत्रयमिषात्रैलोक्यलक्ष्मीमिह॥
जीर्णोद्धारमकारयन्मठमिमं भूमीश्वरग्रामणी-
र्देवः श्रीसमरः स्वभाग्यविभवादिष्टो निजश्रेयसे।
किं चास्मिन्परमास्तिको नरपतिश्चक्रे वसुम्यैः कृपा-
संश्लिष्टः शुभभोजनस्थितिमपि प्रीत्या मुनिभ्यस्ततः॥
अचलेशदण्डमुच्चैः सौवर्णं समरभूपालः।
आयुर्वायुचलाचलमिह दृष्ट्वा कारयामास॥
आसीद्भावाग्निनामेह स्थानाधीशः पुरा मठे।
हेलोन्मूलितसंसारबीजैः पाशुपतैर्वृतः[1]॥
अन्योन्यवैरविरहेण विशुद्धदेहाः
स्नेहानुबन्धिहृदयाः सदया जनेषु।
अस्मिंस्तपस्यति मृगेन्द्रगजादयोऽपि
सत्त्वाः समीक्षितविमोक्षविधायितत्त्वाः॥
शिष्यस्तस्यायमधुना नैष्ठिको भावशंकरः।
शिवसायुज्यलाभाय[2] कुरुते दुष्करं तपः॥

---

१. 'व्रतैः' इति मुद्रितः पाठः. २. 'सायोज्य' इति मुद्रितः पाठः.

फलकुसुमसमृद्धिं सर्वकालं वहन्तः
. परमनियमनिष्ठां यस्य भूमीरुहोऽमी।
अपरमुनिजनेषु प्रायशः सूचयन्ति
स्खलितविषयवृत्तेरर्बुदाद्रिप्रसूताः[1] ॥
राज्ञा समरसिंहेन भावशंकरशासनात्।
मठः सौवर्णदण्डेन सहितः कारितोऽर्बुदे॥
योऽकार्षीदेकलिङ्गत्रिभुवनविदितश्रीसमाधीशचक्र-
स्वामिप्रासादवृन्दे प्रियपटुतनयो वेदशर्मा प्रशस्तीः।
तेनैषापि व्यधायि स्फुटगुणविशदा नागरज्ञातिभाजा
विप्रेणाशेषविद्वज्जनहृदयहरा चित्रकूटस्थितेन[2] ॥
यावदर्बुदमहीधरसङ्गं संबिभर्ति भगवानचलेशः।
तावदेव पठतामुपजीव्या सत्प्रशस्तिरियमस्तु कवीनाम्॥
लिखिता शुभचन्द्रेण प्रशस्तिरियमुज्ज्वला।
उत्कीर्णा कर्मसिंहेन सूत्रधारेण धीमता॥
सं १३४२ वर्षे मार्गशुदि १ प्रशस्तिः कृता।

(भावनगरप्राचीनशोधसंग्रहस्य प्रथमे भागे पृष्ठे ३०-३७)

---

## (११)

## राष्ट्रकूटवंशोद्भवस्य द्वितीयप्रभूतवर्षमहीपतेर्दानपत्रम्।

स्वस्ति विस्तृतविशद[3]यशोवितानविशदीकृताशाचक्रवालकरवालप्रबला-वतंस[4]विराजितजयलक्ष्मासमी। रेङ्गितदक्षदक्षिणाभूरिभुजार्गलः[5] गलितसार-शौर्यरसविसरविखलीकृताप्रारिवर्गः । वर्गत्रयवर्गणैक[6]निपुणाचलाभारवो-र्वी(?)विशेषनिर्जितोर्वीमण्डलोत्सवोत्पादनपरम्पर(?)भूपालमौलिमालालीढा-

---

१. 'अर्बुदाद्रि' इति मुद्रितः पाठः. २. 'चित्तोडगढ'स्थितेनेत्यर्थः. प्रथमं चित्तोड-गढ एव राजधान्यासीत्. उदयपुरनिर्माणं तु पश्चात् (खिस्ताब्दीयषोडशे शतके) जातम्.
३. 'विशाद' इति मुद्रितः पाठः. ४. 'आवतंश' इति मुद्रितः पाठः. ५. 'भुजर्गलः' इति मुद्रितः पाठः. ६. 'वर्गैनैक' इति मुद्रितः पाठः.

ङ्घ्रिद्वन्द्वारविन्दो गोविन्दराजः तस्य सूनुः सुतरुणभावोदयदया-दानदीनेतरगुणगणसं[1]मर्पितबन्धुजनः सकलकलागमजलधिकलशयोनिः म-नुदर्शितमार्गानुगामी राष्ट्रकूटकुलामलगगनमृगलाञ्छनः बुधजनमुखकम-लांशुमाली मनोहरगुणगणालंकृतभारः (?) [2]कक्कराजनामधेयः तस्य पुत्रः स्ववंशानेकनृपसंघातपरम्पराभ्युदयका[3]रणः परमऋषिब्राह्मणभक्तितात्पर्य-कुशलः समस्तगुणगणाधिष्वानो विख्यातसर्वलोकनिरुपमस्थिरभावनिर्जि-तारिमण्डलः यस्येममासीत् (?) ॥

जित्वा भूपारिवर्गान्नयकुशलतया येन राज्यं कृतं यः
कष्टे मन्वादिमार्गस्तुतधवलयशा न क्वचिद्यागपूर्वः ।
सङ्ग्रामे यस्य शेषा स्वभुजकरबलप्रापिता या जयश्री-
र्यस्मिञ्जाते स्ववंशोभ्युदयधवलतां यातदानर्कतेजः (?) ॥

असावि[4]न्द्रराजनामधेयस्तस्य पुत्रः स्वकुलललामायमानो मानधनो दीनानाथजनाह्लादनकरदाननिरतमनोवृत्तिः हिमकर इव सुखकरकरः कु-लाचलसमुदाय इव सुधाधारगुणनिपुणः (?) शिमशैलकूटतटस्थापितयश-[5]स्तम्बो लिखितानेकविक्रमगु[6]णः ।

अघसंघातविनाशकसुरापगा यस्य सद्यशो वि[7]शदम् ।
गायन्तीव तरङ्गै[8]र्भवरवैर्वहति जनमहिता ॥

. असौ वैरमेघनामधेयस्तस्य पितृव्यः हृदयपद्मासनस्थपरेश्वरशिरः-शिशिरकर[[9]कर]निकरनिराकृततमोवृत्तिः सविशेषस्य [10]जगत्त्रयसाम्रो-ढ्येनेव (?) विरचितस्य चतुर्थलोकोदयसमानस्य कृतयुगशतैरिव निष्ठि-[11]तस्य यस्य यशसः पु[12]ञ्जमिव विराजमानः

---

१. 'सतर्पित' इत्युचितः पाठः. २. 'कक्कराजानामधेयः' इति मुद्रितः पाठः. ३. 'कारणम्' इत्यपेक्षितम्. ४. 'इन्दराजानामधेय' इति मुद्रितः पाठः. ५. 'स्तम्बं' इति मुद्रितः पाठः. ६. 'गुनम्' इति मुद्रितः पाठः. ७. 'विशादम्' इति मुद्रितः पाठः. ८. 'प्रभतरावैः' इति मुद्रितः पाठः ९. 'कर' इति मुद्रिते पाठे नास्ति. १०. 'जगत्त्रय' इति मुद्रितः पाठः. ११. 'निष्ठितस्य' इति मुद्रितः पाठः. १२. 'पुञ्ज इव' इत्यपेक्षितम्.

प्रदग्धकालागरुधूपधूमैः प्रवर्धमानोपचयाः पयोदाः।
यस्याजिरं स्वच्छसुगन्धतोयैः सिञ्चन्ति सिद्धोदितकूटभागाः॥ (?)
न चेदृशं प्राप्यमिति प्रलोभाद्भवोद्भवो भावियुगावतारे।
अवैमि यस्य स्थितये स्वयं तत्कल्पान्तरं नैव च भाव्यतीति॥ (?)
तारागणेषून्नतकूटकोटितटार्पितामूज्ज्वलदीपिकासु।
सोमुह्यते रात्रिविभेदभावः निशात्ययः पौरैर्जनैर्निशायाम्॥ (?)
आधारभूताहमिदं व्यतीत्य मां वर्धते चायमतिप्रसङ्गः।
यस्यावकाशार्थमितीव पृथ्वी पृथ्वीव भूतेति च मे वितर्कः॥

विचित्रपताकासहस्रसंछादितमुपरि परिचरणभयाल्लोकैकचूडामणिना मणिकुट्टिमसंक्रान्तप्रतिबिम्बव्याजेन स्वयमवतीर्य परमेश्वरभक्तियुक्तेन नैमस्क्रियमाणमिव विराजमानम्, प्रहतपुष्करमन्द्रनिनादाकर्णनोदितानुरागैः प्राव्डारम्भकालजनितोत्सवारम्भैर्मयूरैः प्रारब्धनृत्तवृत्तान्तम्, धूमवेलालिलागत(?)विलासिनीजनानां करतलकिसलयरसभावसद्भावप्रकटनकुशलशशिवदनाङ्गनानर्तनाहृतपौरयुवतिजनचित्तान्तरम्, समस्तसिद्धान्तसागरपारगमुनिशतसंकुलं देवकुलमासीत् कन्नेश्वरं नाम स्वनामधेयाङ्कितम्।

असावकालवर्ष इति विख्यातस्तस्य सूनुरानतनृपमुकुटमणिगणकिरणजालरञ्जितपादयुगलनखमयूखप्रभाभासितसिंहासनोपान्तः कान्ताजनकटकखचितपद्मरागदीधितिविसरशुम्भत्कुसुम्भरसरञ्जितनिजधवलवीज्यमानचारुचामरनिचयविख्यातः प्राज्यराज्याभिषेकान्तरैश्वर्यसुखसमानुभवस्थितिः निजतुरंगमैकविजयानीतराजलक्ष्मीसनाथो महीनाथो यः कल्पाङ्घ्रिपः संसेव (?) चिन्तामणिरिति दृढं यं वदन्त्यर्थिनः नित्यप्रीत्या प्राप्तार्थसंपदसौ प्रभूतवर्ष इति विख्यातो भूपचक्रचूडामणिः तस्यानुजः धारा-

१. 'तटार्पितासु ज्वाल-' इति मुद्रितः पाठः. २. 'पौरजनैर्' इति मुद्रितः पाठः. ३. 'व्यतीत्यम् आवर्धते' इति मुद्रितः पाठः. ४. 'पृथ्वीम्' इति मुद्रितः पाठः. ५. 'नमस्क्रयमाणम् एव' इति मुद्रितः पाठः. ६. 'वृत्तनृत्तान्तम्' इति मुद्रितः पाठः. ७. कन्नेश्वर इति राज्ञोऽकालवर्षस्य नामान्तरम्. ८. 'विज्यमान' इति मुद्रितः पाठः. ९. 'विचयविख्यातम्' इति मुद्रितः पाठः. १०. 'सत्यमेव' इत्यपेक्षितम्. ११. 'ध्रुवं' इति मुद्रितः पाठः.

वर्षश्रीपृथ्वीवल्लभमहाराजाधिराजपरमेश्वरः खण्डितारिमण्डलासिभासितदोर्दण्डः पुण्डरीक[1] इव बलिरिपुमर्दनाक्रान्तसकलभुवनतलः सुकृतानेकराज्यभारभरोद्वहनसमर्थः हिमशैलविशालोरःस्थलेन[2] राजलक्ष्मीविहर[3]णमणिकुट्टिमेन चतुराङ्गनालिङ्गनतुङ्गकुचसङ्गसुखोद्रेकोदितरोमाञ्चयोजितेन स्वभुजासिधारादलितसमस्तगलितमुक्ताफलबिसरविराजितारिबलहस्तिह[4]स्तास्फालनदन्तकोटिघट्टितघनीकृतेन[5] विराजमानः त्रिपुरहरवृषभककुदाकारोन्नतविकटांसतटनिकटदोधूयमानचारुचामरचयः फेनपिण्डपाण्डुर[6]प्रभावोदितच्छविना वृत्तेनापि चतुराकारेण[7] सितातपत्रेणा[8]च्छादितसमस्तदिग्विवरो रिपुजनहृदयविदारणदारुणेन[9] सकलभूतलाधिपत्यलक्ष्मीलीलामुत्पादयता प्रहतपटहढक्का[10]गम्भीरध्वानेन घनाघनगर्जनानुकारिणा अस्याचितो विनोदनिर्गमः (?) स्वकीयां सांचलतां[11] (?) परनृपचेतोवृत्तिषु दातुमिवोच्चै[12]रोविलोलप्रकटितराज्यचिह्नः (?) तुरङ्गमखरखुरोत्थितपांशुपटलमसृणितजलदसंचयानेकमत्तद्विपकरटतटगलितदानधाराप्रतानप्रशमितमहीपरागः ॥

यस्य श्री चपलोदया खुरतरङ्गालीसमास्फालना-
न्निर्भिन्नद्विपयानपात्रगतयो ये संचलच्चेतसः । (?)
तस्मिन्नेव समेत्य सारविभवं संत्यज्य[13] राज्यं रणे
भग्ना मोहवशात्स्वयं खलु दिशामन्तं भजन्तेऽरयः ॥

इदं कियद्भूतलमत्र सम्यक्स्थातुं महत्संकटमित्युदग्रम् ।
स्वस्यावकाशं न करोति यस्य यशो दिशां भित्तिविभेदनानि ॥

अनवरतदानधारावर्षागमेन तृप्तजनतायाः धारावर्ष इति जगति विख्यातः सर्वलोकवल्लभतया वल्लभ इति । तस्यात्मजो[14] निजभुजबलसमानी-

---

१. 'पुण्डरीकाक्ष' इत्यपेक्षितम्. २. 'स्थलिन' इति मुद्रितः पाठः. ३. 'विहारण' इति मुद्रितः पाठः. ४. 'हास्ता—' इति मुद्रितः पाठः. ५. 'घणोकृतेन' इति मुद्रितः पाठः. ६. 'पाण्डर' इति मुद्रितः पाठः. ७. 'चतुरस्राकारेण' इत्युचितं भाति. ८. 'आतपत्रेन' इति मुद्रितः पाठः. ९. 'दारुणैन' इति मुद्रितः पाठः. १०. 'पदढका' इति मुद्रितः पाठः. ११. 'चञ्चलतां' इति भाति. १२. 'इवोव्वै' इति मुद्रितः पाठः. १३. 'सत्यज्य' इति मुद्रितः पाठः. १४. 'तस्यात्मजा' इति मुद्रितः पाठः.

तपरनृपलक्ष्मीकर[1]धृतधवलातपत्रनालप्रतिकूलरिपुकुलचरणनिबद्धखलखला-
यमानधवलशृङ्खलारवबधिरीकृतपर्यन्तजनो निरुपमगुणगणाकर्णनसमा-
ह्लादित[2]मनसा साधुजनेन सदा सं[3]गीयमानशशिविशदयशोराशिराशावष्ट-
ब्धजनमनःपरिकल्पनत्रिगुणीकृतस्वकीयानुष्ठानो निष्ठितकर्तव्यः प्रभूत-
वर्षश्रीपृथ्वीवल्लभराजाधिराजपरमेश्वरस्य प्रवर्धमानश्रीराज्यविजयसं-
वत्सरेषु [4]वदत्सु । चारुचालुक्यान्वयगगनतल[5]हरिणलाञ्छनायमानश्रीब-
लवर्मनरेन्द्रस्य [6]सूनुः स्वविक्र[7]मावजितसकलरिपुनृपशिरःशेखरार्चितचरण-
युगलो यशोवर्मनामधेयो राजा व्यराजत । तस्य पुत्रः सुपुत्रः [8]कुलदी-
पक इति पुराणवचनम[9]वितथमिह कुर्वन्नातितरां धीराजमानो मनोजात इव
मानिनीजनमनस्थलीयः (?) रणचतुरश्चतुरजनाश्रयः श्रीसमालिङ्गितवि-
शालवक्षस्थलो नितरामशोभत । असौ महात्मा

कमलोचितसद्भुजान्तरश्रीविमलादित्य इति प्रतीतनामा ।
कमनीयवपुर्वि[10]लासिनीनां भ्रमदक्षि[11]भ्रमरालिवक्त्रपद्मः ॥

यः प्रचण्डतर[12]करवालदलितरिपु[13]नृपकरिघटाकुम्भमुक्तमुक्ताफलविकीर्णि-
तरुचिरक्ताब्धिकान्तिरुचिरपरीतनिज[14]कलत्रकण्ठः शितिकण्ठ इव महितम-
हिमामोद्यमानरुचिरकीर्तिरशेषगङ्गमण्डलाधिराजश्रीचाकिराजस्य भा-
गिनेयः भुवि [15]प्रकाशतयस्मि कुनुन्गिलनामदेशमयशः[16]पराङ्मुखा मनु[17]मा-
र्गेण पालयति सति श्रीयापनीयनन्दिसंघपुंनागवृक्षमूलगणे श्रीकित्याचा-
र्यान्वये बहुष्वाचार्येष्वतिक्रान्तेषु व्रतसमितिगुप्तिगुप्तमुनिवृन्दवन्दितचरण-
कूवि[18]लाचार्याणामासीत् (?) तस्यान्तेवासी समुपनतजनपरिश्रमाहारः स्वदा-

१. 'करे धृत' इति मुद्रितः पाठः. २. 'मानसा' इति मुद्रितः पाठः. ३. 'सन्नीय-मान' इति मुद्रितः पाठः. ४. 'वहत्सु' इति भाति. ५. 'हारिण–' इति मुद्रितः पाठः. ६. 'सुनु' इति मुद्रितः पाठः. ७. 'आवञ्जित' इति मुद्रितः पाठः. ८. 'कुलदीपिक' इति मुद्रितः पाठः. ९. 'अवितथं' इति मुद्रितः पाठः. १०. 'विलासिनीना' इति मुद्रितः पाठः. ११. 'भ्रमराली' इति मुद्रितः पाठः. १२. 'करवाला' इति मुद्रितः पाठः. १३. 'नृपरकरि–' इति मुद्रितः पाठः. १४. 'कलत्रिकण्ठः' इति मुद्रितः पाठः. १५. 'प्रकाशते यस्मिन्' इति भाति. १६. 'पराङ्मुखे' इत्यपेक्षितम्. १७. 'मार्गेण पालयति' इति मुद्रितः पाठः. १८. 'आचार्य्यानाम्' इति मुद्रितः पाठः.

नसंतर्पितसमस्तविद्वज्जनो जनितमहोदयः विजयकीर्तिनाममुनिप्रभुरभूत् ।

अर्ककीर्तिरिति ख्यातिमातन्वन्मुनिसत्तमः ।

तस्य शिष्यत्वमायातो नायातो वशमेनसाम् ॥

तस्मै मुनिवराय तस्य विमलादित्यस्य शणेश्वर(?)पीडापनोदाय मयूरखण्डिमधिवसति विजयस्कन्धावारे चाकिराजेन विज्ञापितो वल्लभेन्द्रः इडिगूर्विषयमध्यवर्तिनं जालमङ्गलंनामधेयग्रामं शकनृपसंवत्सरेषु शरशिखिमुनिषु (७३५) व्यतीतेषु ज्येष्ठमासशुक्लपक्षदशम्यां पुष्यनक्षत्रे चन्द्रवारे मान्यपुरवरापरदिग्विभागालंकारभूतशिलाग्रामाजैनेन्द्रभवनाय दत्तवान् तस्य पूर्वदक्षिणापरोत्तरदिग्विभागेषु स्वस्तिमङ्गल-बेछिन्द-गुडनूर-त्तरिपाल इति प्रसिद्धा ग्रामाः एवं चतुर्णां ग्रामाणां मध्ये व्यवस्थितस्य जालमङ्गलस्यायं चतुरायधिक्रमः पुनस्तस्य सीमाविभागः ईशानतः मुकूडल्दक्षिणदिग्विभागमवलोक्य एल्तग-कोडल-मूडग-केल-बन्दु इर्प्पेय-कोषदे-पछद्-ओलगण उलि-अलरियें कोदेयालि-बेलने सयूकने-बन्दु पोल पुणसे एव कीले अन्ते पोयिए बिदिरूग्गेरे मुकूडल् ततः पश्चिमतः पुलिपदिय तेङ्कण पेर्ओल्बेये पेर्बिलिके एलगल-करण्डलो मुकूडल् अन्ते सयूकने पोगि नायूमणिगेरेय तायूगण्डि मुकूडल् ततः उत्तरतः बछगेरेय पडुव गजगोड पळम्बे पुणुसेये आनेदलो गेरेए पुलूपडिये एलगछे पुलिगारद गेरे मुकूडल् ततः पूर्वतः निडु विळिङ्के....दविन पुलूपडिये कच्चगार गछे पोल एछे पुणुसये बट्टपुणुसये बेळने बन्दु ईशानद मुकूडलोल् कूडि निन्दत्तू । राचमछगामुण्डनुं शीरनुं गङ्गामुण्डनुं मारेयनुं बेल्गेरेयूओडेयोरुं मोदबागे-एलूपदिम्बरुं कुनुन्गिल्-अयसाबेरुं साक्षियागे कोट्टत्तू । नमः ।

---

१. 'अमाद्' इति मुद्रितः पाठः. २. 'एनसा' इति मुद्रितः पाठः. ३. 'तस्मे' इति मुद्रितः पाठः. ४. 'विमलादित्यास्य' इति मुद्रितः पाठः. ५. 'वसती' इति मुद्रितः पाठः. ६. 'वार्त्तिन' इति मुद्रितः पाठः. ७. 'जिनेन्द्र' इति भाति. ८. 'ग्रामानां' इति मुद्रितः पाठः. ९. 'चतुरवधिक्रमः' इति भाति.

अद्भिर्दत्तं त्रिभिर्भुक्तं षड्भिश्च परिपालितम्।
एतानि न निवर्तन्ते पूर्वराजकृतानि च॥
स्वं दातुं [1]सुमहच्छक्यं दुःखमन्यस्य पालनम्।
दानं वा पालनं [2]वेति दानाच्छ्रेयोऽनुपालनम्॥
स्वदत्तां परदत्तां वा यो [3]हरेत वसुंधराम्।
षष्टिं वर्षसहस्राणि विष्ठाया जायते क्रिमिः॥
देवस्वं [हि] विषं घोरं कालकूटसमप्रभम्।
विषमेकाकिनं हन्ति देवस्वं पुत्रपौत्रकम्॥

(इण्डियन् आण्टिक्केरी १२।१३-१६)

## (१२)

### [4]मथनदेवमहीपतेर्दानपत्रम्।

ॐ स्वस्ति। परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीक्षितिपालदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्री[5]विजयपालदेवानामभिप्रवर्धमानकल्याणविजयराज्ये संवत्सरशतेषु दशसु षोडशोत्तरकेषु माघमाससितपक्षत्रयोदश्यां शनियुक्तायामेवं १०१६ माघसुदि १३ शनावद्य श्री[6]राज्यपुरावस्थितो महाराजाधिराजपरमेश्वरश्री[7]मथनदेवो महा-

१. 'सुमच्छक्यं' इति मुद्रितः पाठः. २. 'वेत्ति' इति मुद्रितः पाठः. ३. 'हरेति' इति मुद्रितः पाठः. ४. एतल्लेखशिला अलवरनगरे पण्डितश्रीभवानन्दोदयानन्दरामचन्द्रशर्मणां सद्ने वर्तते. तैरेव मुद्रितं स्वहस्तलिखितं च तत्प्रतिरूपकमुपयुक्तेन टिप्पणेनालंकृत्यास्मभ्यं प्रहितमिति भूयसीं तदुपकृतिं प्रणतिपुरःसरं स्वीकुर्मः. ५. विजयपालनामा तत्समये सुप्रसिद्धो महीपतिरासीत्, यत्संततिरधुना 'करौली'नगरे राज्यं करोति. विजयपालसमये तु तद्राजधानी 'बयाना'नगरमभूत्, यदधुना भरतपुरराज्यान्तर्गतं वर्तते. ६. अलवरनगराद्दक्षिणदिश्यष्टादशक्रोशान्तरे पर्वतस्थल्यामधुना 'राजोर'नाम्ना प्रसिद्धो ग्राम एव राज्यपुरमासीत्. अद्यापि तत्र चतुर्दिक्षु छिन्नभिन्नगोपुरप्राकारापणदेवालयादीनि प्राचीननगरचिह्नानि दृश्यन्ते. लभ्यन्ते चेतस्ततः प्रकीर्णा भूयस्यः खण्डिता बौद्धप्रतिमाः. विलोक्यन्ते च प्राचीनत्वानुमापका बहवश्चतुष्कोणाः कूपाः. तत्र च कथाशेषतां गतेषु परःशतेषु देवालयेष्वधुना नीलकण्ठमहादेवस्याशावरीदेव्याश्च त्रुटितप्रायं मन्दिरमवशिष्यते. श्रावणमासे च नीलकण्ठदर्शनार्थं सर्वतो जनाः समायान्ति. ७. मथनदेवस्तु विजयपालस्य कश्चन सामन्त आसीदित्यनुमीयते.

राजाधिराजश्रीसावटसूनुर्गुर्जरप्रतीहारान्वयः कुशली स्वभोगावाप्तवंशपोतकभोगसंबद्धव्याघ्रवाटकग्रामे समुपगतान्सर्वानेव राजपुरुषान्नियोगस्थान्क्रमागमिकान्नियुक्तकानियुक्तकांस्तन्निवासिमहत्तरमहत्तमवणिक्प्रवणिप्रमुखजनपदांश्च यथार्हं मानयति बोधयति समादिशति च । अस्तु वः संविदितम्—तृणाग्रलग्नजलबिन्दुसंस्थानास्थिराणि शरीरसंपज्जीवितानीतीमां संसारासारतां, कीर्तिमूर्तेश्च कल्पस्थायितां ज्ञात्वा मया पित्रोरात्मनश्च पुण्ययशोभिवृद्धये ऐहिकामुष्मिकफलनिमित्तं संसारार्णवतरणार्थं स्वर्गमार्गर्गलोद्घाटनहेतोः स्वमातृश्रीलच्छुकानाम्ना श्रीलच्छुकेश्वरमहादेवाय प्रत्यहं ३ स्नपनसमालभनपुष्पधूपनैवेद्यदीपतैलसुधासिन्दूरलागनखण्डस्फुटितसमारचनप्रेक्षणकपवित्रकारोहणकर्मकरवाटिकापालादिव्ययार्थमुपरि सूचितव्याघ्रवाटकग्रामः स्वसीमातृणयूतिगोक(च)रपर्यन्तः सोद्रङ्गः सवृक्षमालाकुलः सकलाभोगम(सकलभोगसं)युतादायाभ्यामपि समस्तसस्यानां भागखलभिक्षाप्रस्थकस्कन्वकमार्गणकदण्डदशापराधदाननिधिनिधानापुत्रिकाधननाष्टिभरटोचितानुचितनिबद्धानिबद्धसमस्तप्रत्यादेयसहितस्तथैतत्प्रत्यासन्नश्रीगुर्जरवाहितसमस्तक्षेत्रसमेतश्चाकिंचित्प्रग्राह्योऽद्य पुण्येऽहनि स्नात्वा देवस्य प्रतिष्ठाकाले उदकपूर्वं परिकल्प्य शासनेन दत्तः । मत्वैवमद्य दिनादारम्य श्रीमदामर्दकविनिर्गतश्रीसोपुरीयसंतत्यां श्रीछात्रशिवे श्रीगोपालीदेवीतडागपालीमठसंबद्धश्रीराज्यपुरे श्रीनित्यप्रमुदितदेवमठे श्रीश्रीकण्ठाचार्यशिष्यश्रीरूपशिवाचार्यस्तच्छिष्यश्रीमदोंकारशिवाचार्यस्यास्खलितब्रह्मचर्यावाप्तमहामहिम्नः परमयशोराशेः शिष्यप्रतिशिष्यक्रमेण देवोपयोगार्थं तन्निमव्यवच्छेदेनाचन्द्रार्कं यावत्कुर्वतः कारयतो वास्मद्वंशजैरन्यतरैर्वा भाविभिर्भूपालैः कालकालेष्वपि परिपन्थना न कार्या । प्रत्युतास्मत्कृतप्रार्थनया सदा तन्निसानाथ्यं वोढव्यम् । यतः समानैवेयं पुण्यफलावाप्तिरनुमन्तव्या ।' उक्तं च भगवता परमर्षिणा वेदव्यासेन व्यासेन—

'बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

१. अयं ग्रामोऽधुना 'बाघोर'नाम्ना प्रसिद्धोऽस्ति.

आदित्यो वरुणो वायुर्ब्रह्मा विष्णुर्हुताशनः ।
भगवाञ्शूलपाणिश्च अभिनन्दति भूमिदम् ॥
षष्टिर्वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरकं वसेत् ॥'

यैर्वाञ्छितं शिशिरदीधितिशुभ्रकीर्ते-
यैश्चामरप्रणयिनीपरिरम्भणस्य ।
ते साधवो नहि हरन्ति परेण दत्तां
दानाद्वदन्ति परिपालनमेव साधु ॥

शासनं कृतवान्देवो लिखितं तस्य सूनुना ।
व्यक्तं सूरप्रसादेन उत्कीर्णं हरिणा ततः ॥ इति ॥

तथामुष्मै देवाय पार्श्वदेवकुलिकाचतुष्टया ४ राजधान्यां प्रतिष्ठितविनायकसहिताय हट्टदाने गोनीं प्रतिहट्टव्यावहारिकावि २ घटककूपकं प्रति घृतस्य तैलस्य च पलिके द्वे २ वीथीं प्रति मासि २ विं २ तथा बहिः प्रविष्टचोछिकां प्रति पर्णानां १० एतद्देवस्य कृतमिति॥ श्रीमथनः ॥ ९

---

## (१३)

## श्रीपृथ्वीकोङ्गणिमहाराजस्य दानपत्रम् ।

स्वस्ति जितं भगवता गतघनगगनाभेन पद्मनाभेन । श्रीमज्जाह्नवेयकुलामलव्योमावभासनभास्करः स्वखड्गैकप्रहारखण्डितमहाशिलास्तम्भलब्धबलपराक्रमो दारुणारिगणविदारणोपलब्धव्रणविभूषणविभूषितः काण्वायनसगोत्रः श्रीमत्कोङ्गणिवर्मधर्ममहाधिराजः,तस्य पुत्रः पितुरन्वागतगुणयुक्तो विद्याविनयविहितवृत्तः सम्यक्प्रजापालनमात्राधिगतराज्यप्रयोजनो विद्वत्कविकाञ्चननिकषोपलभूतो नीतिशास्त्रस्य वक्तृप्रयोक्तृकुशलो दत्तकसूत्र-

---

१. 'कुलामलाव्योमा' इति मुद्रितः पाठः. २. 'पराक्रमोदारणा' इति मुद्रितः पाठः. ३. 'पुत्र' इति मुद्रितः पाठः. ४. 'विहीत' इति मुद्रितः पाठः.

वृत्तेः प्रणेता श्रीमान्माधवमहाधिराजः, तत्पुत्रः पितृपैतामहगुणयुक्तोऽनेकचातुर्दन्तयुद्धावाप्तचतुरुदधिसलिलस्वादितयशाः श्रीमद्धरिवर्ममहाधिराजः, तस्य पुत्रो द्विजगुरुदेवतापूजनपरो नारायणचरणानुध्यातः श्रीमान्विष्णुगोपमहाधिराजः, तत्पुत्रस्त्र्यम्बकचरणाम्भोरुहरजःपवित्रीकृतोत्तमाङ्गः स्वभुजबलपराक्रमक्रयक्रीतराज्यः कलियुगबलपङ्कावसन्नधर्मवृषोद्धरणनित्यसंनद्धः श्रीमान्माधवमहाधिराजः, तत्पुत्रः श्रीमत्कदम्बकुलगगनगभस्तिमालिनः कृष्णवर्ममहाधिराजस्य प्रियभागिनेयो विद्याविनयातिशयपरिपूरितान्तरात्मा निरवग्रहप्रधानशौर्यो विद्वत्सु प्रथमगण्यः श्रीमान्कोगणिमहाधिराजः अविनीतनामा, तत्पुत्रो विजृम्भमाणशक्तित्रयः अन्दरिह्-अलत्तुप्-पौरुळरे-पेलूनग-राज्यानेकसमरमुखमखहुतशूरपुरुषपशूपहारविघसविहस्तीकृतकृतान्ताग्निमुखः किरातार्जुनीयपञ्चदशसर्गादिकोंकारो दुर्विनीतनामधेयः, तस्य पुत्रो दुर्दान्तविमर्दविमृदितविश्वंभरादिपञ्चालिमालामकरन्दपुञ्जपिञ्जरीक्रियमाणचरणयुगलनलिनो मुष्करनामधेयः, तस्य पुत्रश्चतुर्दशविद्यास्थानाधिगतविमलमतिः विशेषतो नवकोशस्य नीतिशास्त्रस्य वक्तृप्रयोक्तृकुशलो रिपुतिमिरनिकरनिराकरणोदयभास्करः श्रीविक्रमप्रथितनामधेयः, तस्य पुत्रोऽनेकसमरसंपादितविजृम्भितद्विरदरदनकुलिशाघातव्रणसंरुद्धस्वास्थ्यद्विजय(?)लक्षणलक्षीकृतविशालवक्षःस्थलः समधिगतसकलशास्त्राब्धितत्त्वः समाराधितत्रिवर्गो निरवद्यचरितः प्रतिदिनमभिवर्धमानप्रभावो भूविक्रमनामधेयः। अपि च।

नानाहेतिप्रहारप्रतिहतसुभटारामवाटोत्थितासृ-
ग्धारास्वादामृताशक्षुभितपरिसरद्गृध्रसंरुद्धसीमे।
सामन्तान्पल्लवेन्द्रान्नरपतिमजयद्यो विलन्दाभिधाने
राजा श्रीवल्लभाख्यः समरशतजयावाप्तलक्ष्मीविलासः॥

तस्यानुजो नतनरेन्द्रकिरीटकोटि-
रत्नार्कदीधितिविराजितपादपद्मः।

१. 'सलील' इति मुद्रितः पाठः. २. 'क्रित' इति मुद्रितः पाठः. ३. 'प्रधान' इति मुद्रितः पाठः.

लक्ष्म्याः स्वयंवृतपतिर्नवकामनामा
शिष्टप्रियोऽरिगणदारणलब्धकीर्तिः ॥

तस्य कोगणिमहाराजस्य सीमेश्वरापरनामधेयस्य पौत्रः समवनतसमस्तसामन्तमुकुटतटघटितबहुलरत्नविलसदमरधनुःखण्डमण्डितचरणनखमण्डलो नारायणे निहितभक्तिः शूरपुरुपतुरगनरवारणघटासंघट्टदारुणसमरशिरसि निहितात्मकोपो भीमकोपः प्रकटरतिसमयसमनुवर्तनचतुरयुवतिजनलोकधूर्तो लोकधूर्तः सुदुर्धरानेकयुद्धमूर्धन्यलब्धविजयसंपदहितगजघटाकेसरी राजकेसरी। अपि च।

यो गङ्गान्वयनिर्मलाम्बरतलव्याभासनप्रोल्लस-
न्मार्तण्डोऽरिभयंकरः शुभकरः सन्मार्गरक्षाकरः।
सौराज्यं समुपेत्य राज्यसविता राजन्यतारोत्तमो
राजा श्रीपुरुषेश्वरो विजयते राजन्यचूडामणिः ॥

कामं रामः स चापे दशरथतनयो विक्रमे जामदग्न्यः
प्राज्ये वीर्ये बलारिर्बहुमहसि रविः स्वप्रभुत्वे धनेशः।
भूयो विख्यातशक्तिः स्फुटतरमखिलप्राणभाजां विधाता
धात्रा सृष्टः प्रजानां पतिरिति कवयो यं प्रशंसन्ति नित्यम् ॥

तेन प्रतिदिनप्रवृत्तमहादानजनितपुण्याहघोषमुखरितमन्दिरोदरेण श्रीपुरुषप्रथमनामधेयेन पृथ्वीकोङ्गणिमहाराजेन अष्टानवत्युत्तरषट्छतेषु(६९८) शकवर्षेष्वावर्तितेष्वात्मनः प्रवर्धमानविजयवीर्यसंवत्सरे पञ्चाशत्तमे प्रवर्धमाने मान्यपुरमधिवसति विजयस्कन्दावारे श्रीमूलमूलशरणाभिनन्दितनन्दिसंघान्वय-एरेगित्तुर्नाम्नि गणे मूलिकलगच्छे स्वच्छतरगुणाकिर(?)-प्रततिप्रह्लादितसकललोकश्चन्द्र इवापरश्चन्द्रनन्दिनामगुरुरासीत्। तस्य शिष्यः समस्तविबुधलोकपरिरक्षणक्षमात्मशक्तिः परमेश्वरलालनीयमहिमा कुमारवद्द्वितीयः कुमारनन्दिनामा मुनिपतिरभवत्। तस्यान्तेवासी समधिगतसकलतत्त्वार्थसमर्पितबुधसार्थसंपत्संपादितकीर्तिः कीर्तिनन्द्याचार्यो नाम महामुनिः समजनि। तस्य प्रियशिष्यः शिष्यजनकमलाकर-

प्रबोधजनकः मिथ्याज्ञानसंततसनुतससन्मानात्तक(?)सद्धर्मव्योमावभासनभास्करो विमलचन्द्राचार्यः समुदपादि । तस्य महर्षेर्धर्मोपदेशनया श्रीमद्बाणकलकलः (?) सर्वतपोमहानदीप्रवाहः बाहादण्डमण्डलाखण्डितारिमण्डलद्रुमषण्डो डुण्डुप्रथमनामधेयो निर्गुण्डयुवराजो जज्ञे । तस्य प्रियात्मज आत्मजनितनयविशेषनिःशेषीकृतरिपुलोकः लोकहितः मधुरमनोहरचरितः चरितार्थत्रिकरणप्रवृत्तिः परमगूळप्रथम[नाम]धेयः श्रीपृथ्वीनिर्गुण्डराजोऽजायत । पल्लवाधिराजप्रियात्मजायां सगरकुलतिलकान्मरुवर्मणो जाता कुण्डव्वीनामधेया भर्तृभावनाविर्बभूव भार्या । तया सततप्रवर्तितधर्मकार्यया निर्मिताय श्रीपुरोत्तरदिशमलंकुर्वते लोकतिलकधाम्ने जिनभवनाय खण्डस्फुटितनवसंस्कारदेवपूजादानधर्मप्रवर्तनार्थं तस्यैव पृथ्वीनिर्गुण्डराजस्य विज्ञापनया महाराजाधिराजपरमेश्वरश्रीजसहितदेवेन निर्गुण्डविषयान्तःपातिपोन्नल्लिनामा ग्रामः सर्वपरिहारोपेतो दत्तः । तस्य सीमान्तराणि—पूर्वस्यां दिशि नोलिबेळ्दा बेल्गल्मोराडि । पूर्वदक्षिणस्यां दिशि पण्यङ्गेरि । दक्षिणस्यां दिशि बेल्गाल्लिगेरेया दिळगेरेया पळ्दाकूदल् । दक्षिणपश्चिमायां दिशि जैदराकेय्या बेल्गल्मोरड्ड । पश्चिमायां दिशि हेङ्केवी ताळ्तुवायराकेरि । पश्चिमोत्तरस्यां दिशि पुणुसेयागोट्टगालाकलकुप्पे । उत्तरस्यां दिशि सामगेरेया पळ्दा पेर्मुरिक्के । उत्तरपूर्वस्यां दिशि कलम्बेट्टिगट्ट । ईशान्यामन्यानि क्षेत्रान्तराणि दत्तानि डुण्डुसमुद्रदावयलुल्किरुदारामेगेपदिरकण्डुगम्मण्णमपालेया इरनल्लुराजापोळुदिर्कण्डुगं श्रीवरदाडुण्डुगामण्डराताण्डडाडुवयाण्डुताण्डुश्रीवरदावयलुल्कम्मरगट्टिनल्लिइर्कण्डुगं कळनि पेर्गेरेया केलगे आरुगण्डुगं एरेपूळिगेरेया कोयिल्गोदाएदा इर्पत्तुगुण्डुगं बेदे अडुवश्रीवरदा बडगणापट्टुवणाकोनुळन् देवं गेरीमदमं ऐदिदं मूवत्ताडिण्डुमनेयमनेताणम् । अस्य दान[स्य] साक्षिणोऽष्टादशप्रकृतयः । अस्य दानस्य साक्षिणः षण्णवतिसहस्रविषयप्रकृतयः । योऽस्यापहर्ता लोभान्मोहात्प्रमादेन वा स पञ्च-

भिर्महद्भिः पातकैः संयुक्तो भवति । यो रक्षति स पुण्यभाग्भवति । अपि चात्र मनुगीताः श्लोकाः—

'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिर्वर्षसहस्राणि विष्टायां जायते क्रिमिः ॥
स्वं दातुं सुमहच्छक्यं दुःखमन्यस्य पालनम् ।
दानं वा पालनं वेति दानाच्छ्रेयोऽनुपालनम् ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
देवस्वं तु विषं घोरं न विषं विषमुच्यते ।
विषमेकाकिनं हन्ति देवस्वं पुत्रपौत्रकम् ॥'

सर्वकलाधारभूतचित्रकलाभिज्ञेन विश्वकर्माचार्येणेदं शासनं लिखितम् । चतुष्कण्डुकव्रीहिबीजमात्रं द्विकण्डुककङ्कुक्षेत्रं तदपि ब्रह्मदेयमिव रक्षणीयम् ॥

(इण्डियन् आण्टिक्केरी २।१५६–१५९)

---

# (१४)

## यादववंशोद्भवस्य वीरबल्लालदेवमहीपतेर्दानपत्रम् ।

स्वस्ति ॥

त्रैलोक्यं पाल्यते येन सदयं सत्त्ववृत्तिना ।
स देवो यदुशार्दूलः श्रीपतिः श्रेयसेऽस्तु वः ॥
देवः समस्तसामन्तमस्तकन्यस्तशासनः ।
आचन्द्रार्कं नृपः पायाद्भुवमम्भोधिमेखलाम् ॥
आसीत्क्षितौ क्षत्रियपुंगवानां शिरोमणिः श्रीयदुनामधेयः ।
यदन्ववाये स हरिर्धरित्रीभारावतारार्थमजोऽपि जातः ॥
तदन्ववाये बहवो बभूवुर्भुजोद्भवा विश्रुतकीर्तिभाजः ।
अद्यापि लोके चरिताद्भुतानि येषां पुराणेषु पठन्ति सन्तः ॥

कालक्रमेणाथ बभूव कश्चिन्महीपतिस्तत्र सलाभिधानः ।
कुलस्य कृत्वा व्यपदेशमन्यं विस्मारितो येन यदुस्तदाद्यः ॥
केनापि व्रतिपतिना स्वदेवकार्ये शार्दूलं ग्रसितुमुपागतं निहन्तुम् ।
आदिष्टः शशकपुरे स होय्सलेति प्रापत्तं किल विनिहत्य होय्सलाख्याम् ॥
ततः प्रभृति तद्वंशे प्रवृत्तं होय्सलाख्यया ।
शार्दूलश्च ध्वजस्यासीदङ्कः शत्रुभयंकरः ॥
अपरेषु च तद्राज्यं भुक्तवत्स्वथ राजसु ।
विनयादित्य इत्यासीत्क्रमशः पृथिवीपतिः ॥
इरेयङ्गाभिधानोऽभून्नृपतिस्तस्य चात्मजः ।
गुणैरनन्यसामान्यैः प्रख्यातः पृथिवीतले ॥
अथ तस्यापि बल्लाल-विष्णुवर्धननामकौ ।
अभूतामात्मजन्मानावुदयादित्यपश्चिमौ ॥
तेजस्विनौ भूतहितप्रवृत्तौ लोकपूजितौ ।
यावभासयतां विश्वं सूर्याचन्द्रमसाविव ॥
रणशिरसि येन बलिना गजपतिमाक्रम्य निजतुरङ्गेण ।
विनिपात्य जगद्देवं सप्ताङ्गं तस्य चापहृतम् ॥
तत्राग्रजे निजं राज्यमुपभुक्तवति क्रमात् ।
अनुजोऽपि चिरं राज्यं बुभुजे विष्णुवर्धनः ॥
यो देशमग्रहारीकृत्य समस्तं निजं स्वराज्यार्थम् ।
आचक्रामोच्चङ्गीप्रभृतीनन्यान्द्विषद्देशान् ॥
आरभ्य निजनिवासाद्बेल्वोलूपर्यन्तमखिलमहिविषयम् ।
आक्रम्य येन धौतं तुरगवपुः कृष्णवेणायाम्[1] ॥
यः स्मार्यते नियुक्तैः प्रत्युपचारं नृपेष्वसाध्यतया ।
परमर्दिदेवनृपतेर्होय्सलमवधारयेति मुहुः ॥
येनाग्रहाराः कृतवो महादानानि षोडश ।
अन्यान्यपि च पुण्यानि पौनःपुन्येन चक्रिरे ॥

---

१. 'कृष्णवेर्ण्णायाम्' इति मुद्रितः पाठः.

नरसिंह इति ख्यातो जातस्तस्यात्मजो नृपः।
यस्य वर्णयितुं नैव शक्यन्ते मादृशैर्गुणाः॥
तस्य श्रीरिव दैत्यारेः शंकरस्येव पार्वती।
आसीदेचलदेवीति महादेवी कुलोद्गता॥
तेनापि तस्यामतुलप्रभावो वङ्केश्वरारायनलब्धराज्यः।
जातः सुतो दोर्बलचक्रवर्ती श्रीवीरबल्लाल इति प्रसिद्धः॥
माध्यस्थ्येनोन्नत्या काञ्चनविभवेन विबुधसेव्यतया।
यो जङ्गम इव मेरुर्महीभृतामग्रणीर्जगति॥
सीमातिक्रमभीरोरतिगम्भीरस्य विपुलसत्त्वस्य।
रत्नाकरस्य यस्य च न कोऽपि लक्ष्मीवतो भेदः॥
चरितं भरतादीनामपि भुवने तावदेव बोध्यमिह।
लोकोत्तरा न यावद्दृश्यन्ते यस्य साधुगुणाः॥
विष्णौ निसर्गसिद्धां भक्तिं यस्याद्य पश्यतां पुंसाम्।
प्रह्लादादिकथा अपि न विस्मयाय प्रकल्पन्ते॥
तन्न तपस्तन्नेष्टं तन्न हुतं तन्न दानमस्तीह।
असकृन्न येन विहितं देशे काले च पात्रे च॥
स्त्रीष्वर्भकेषु शूद्रेष्वन्येष्वपि येषुकेषुचिज्जगति।
सोऽस्ति न जनो विधत्ते यः पापं यत्र शासितरि॥
षट्तर्ककाव्यनाटकवात्स्यायनभरतराजनीतिषु च।
अन्येषु तेषु तेषु च शास्त्रेष्वखिलेषु यः कुशलः॥
सर्वेषु दर्शनेषु च भुवि तार्किकचक्रवर्तिनो यस्य।
नैवास्ति प्रतिवादी वादिमदद्विरदकेसरिणः॥
सर्वायुधाजीवपुरःसरेण समस्तविद्वज्जनवल्लभेन।
शस्त्राणि शास्त्राणि च येन लोके सनाथतामद्य चिराद्गतानि॥
यन्नामधेयमपि विश्वविलासिनीनां
लोके वशीकरणकर्मणि सिद्धमन्त्रः।

१. 'लक्ष्मीवतोर्' इति मुद्रितः पाठः. २. 'प्रहारादि' इति मुद्रितः पाठः.

तस्य प्रगल्भवनिताकुसुमायुधस्य
सौभाग्यवर्णनविधौ कतमः समर्थः ॥
वि[1]वग्वाजिखुरप्रहारदलितक्षोणीतलप्रोच्चले-
द्धूलीध्वान्तनिमीलिताखिलदिशि द्वन्द्वप्रदोषागमे ।
दूतीवातिप[2]टीयसी मुहुरिह स्वःसुन्दरीभिः समं
वीराणामभिसारणं वितनुते यत्खड्गयष्टिर्द्विषाम् ॥
शश्वद्यत्समरावतारपिशुनेष्वाहन्यमानेष्वित-
स्तूर्येषु स्वपतिप्रणाशचकिताः क्षुभ्यन्त्यरातिस्त्रियः ।
अप्येताः सुभटस्वयंवरकृते मन्दारमालामितो
हस्ताभ्यां परिगृह्य नाकवनिताः सज्जीभवन्त्यम्बरे ॥
यस्मिन्होय्सलभूमिपालधरणीसाम्राज्यसिंहासना-
दारूढे सति मत्तवारणपतेर्यु[3]द्धाय पूर्वासनम् ।
सद्यः स्वस्वकुलक्रमागतमहीसाम्राज्यसिंहासना-
त्प्रत्यर्थिक्षितिपालकैरपि रणे वल्मीकमारुह्यते ॥
यस्मिन्दिग्विजयार्थमुद्यतवति प्रस्थानभेरीरवे
गम्भीरे स्फुटमुच्चरत्यवनिभृत्स्वन्येषु वार्तैव का ।
दूरादङ्गकलिङ्गवङ्गमगधाश्चोलास्तथा मालवाः
पाण्ड्याः केरलगुर्जरप्रभृतयोऽप्युज्झन्ति सद्यो धृतिम् ॥
न्यक्कारेण पितुः श्रियं कलचुरिक्षत्रान्वयात्कर्षता
येनैकेन पि(हि) तूबरेण करिणा षष्टिर्जिता दन्तिनाम् ।
तं च ब्रह्मचमूपतिं गजघटावष्टब्धसैन्यं हठा-
द्येनाश्वैरपि केवलैर्भुजभृता निर्जित्य राज्यं हृतम् ॥
उच्छिद्य जैत्रसिंहं दक्षिणमिव तस्य भिल्लमस्य भुजम् ।
वीरेण येन लब्धं कुन्तलदेशाधिपत्यमपि ॥

---

१. 'विष्वद्वाजि' इति मुद्रितः पाठः. २. 'पटीयसी' इति मुद्रितः पाठः. ३. 'युद्धास्य' इति मुद्रितः पाठः.

स च समस्तभुवनाश्रयश्रीपृथ्वीवल्लभमहाराजाधिराजपरमेश्वरपरमभट्टारकद्वारावतीपुरवराधीश्वरयादवकुलाम्बरद्युमणिसम्यक्त्वचूडामणिमलपगलूगण्डकदनप्रचण्ड(?)-असहायशूर-एकाङ्गवीर-शनिवारसिद्धि-गिरिदुर्गमल्ल-चलदङ्कराम-इत्यादिसमस्तप्रशस्तनामावलीविराजमानः श्रीमत्प्रतापचक्रवर्तिश्रीवीरबल्लाळदेवो लोक्किगुण्डिनिवेशितविजयस्कन्धावारः

अस्ति स्वयंभूः कन्तुकाभिधाने ग्रामे त्रिकूटेश्वरनामधेयः।
शिवः समस्तक्षितिपालमौलिमणिप्रभारञ्जितरम्यपीठः॥
तस्य स्थानाचार्यः कालमुखाचार्यसंततिप्रभवः।
सिद्धान्तिचन्द्रभूषणपण्डितदेवाभिधोऽस्ति मुनिः॥
तं त्रिकूटेश्वरं देवं लिङ्गैः स्वैः स्थापयेस्त्रिभिः।
तमन्येन समं येन चतुःकूटेश्वरं विदुः॥
सततशरीरार्धस्थितगौरीभुजसंगमाद्यभूत्स्वप्य(?)।
शिव इव विराजमानो यो भाति ब्रह्मचर्यरतः(?)॥

यश्च

कुलशैलेषु चलत्स्वपि मर्यादामतिपतत्सु सिन्धुषु च।
सत्यं न सत्यवाक्यद्वितीयनामापदि त्यजति॥
अन्यत्र काव्यनाटकवात्स्यायनभरतराजनीत्यादौ।
नैव कथा सिद्धान्तेष्वखिलेष्वपि यस्य नास्ति समः॥

येन च

आदृश्येत कदाचिद्विश्रामो गतिषु [जल]तरङ्गाणाम्।
न त्वेव कृपाभाजा प्रदीयमानेऽश्नतां सत्रे॥
अन्नेनैव न केवलमपि तु सुवर्णोपधाम्बुवस्त्राद्यैः।
अन्तो नास्ति जनानां निरन्तरं तृप्यमाणानाम्॥

१. 'विराजमानर्' इति मुद्रितः पाठः. २. 'तमन्येन' इति मुद्रितः पाठः. ३. 'विरज्यमानो' इति मुद्रितः पाठः. ४. 'नामापति' इति मुद्रितः पाठः. ५. 'तप्यमानानाम्' इति मुद्रितः पाठः.

येन चात्र स्थाने

उद्धृत्य जीर्णमखिलं निर्माय च नूतनं[1] पुरं रम्यम्।
देवान्तिकमानीता वेश्यावीथी स्थिता परतः॥

अमृतोपमपानीयपूर्णा पुष्करिणी कृता।
वनं च नन्दनसमं[2] नानपुष्पलतावृतम्॥

किं जल्पनेन[3] बहुना ग्रामप्राकारवलयबाह्यमिह।
यद्यत्समस्ति[4] तत्तत्समस्तमपि तस्य निर्माणम्॥

तस्य भगवतश्चराचरगुरोः श्रीस्वयंभूत्रिकूटेश्वरदेवस्याङ्गरङ्गभोगखण्डस्फुटितजीर्णोद्धाराद्यर्थं विद्यादानार्थं तपोधनब्राह्मणादिभोजनार्थं बेल्वोलत्रिशतान्तर्गतहोम्बालगुनामधेयग्रामं पूर्वप्रसिद्धसीमासमन्वितं निधिनिक्षेपजलपाषाणारामादिसहितं त्रिभोग्याभ्यन्तरमष्टभोगतेजःस्वाम्ययुक्तं शुल्कदण्डादिसकलद्रव्योपार्जनोपेतं शकनृपकालातीतसंवत्सरशतेषु चतुर्दशाधिकेष्वेकादशसु अङ्कतोऽपि १११४ वर्तमानपरिभाविसंवत्सरान्तर्गतमार्गशीर्षपौर्णमास्यां शनैश्चरवारे[5] सोमग्रहणे तस्य कालमुखाचार्यसोमेश्वरदेवप्रशिष्यस्य विद्याचरणदेवशिष्यस्य सत्यवाक्यापरनामधेयस्य श्रीमदाचार्यसिद्धान्तिचन्द्रभूषणपण्डितदेवस्य पादप्रक्षालनं कृत्वा राजा[6] राजकीयैरप्यनङ्गुलिप्रेक्षणीयं सर्वनमस्यं कृत्वा धारापूर्वकं भक्त्या दत्तवान्। अस्य च धर्मस्य संरक्षणे फलमिदमुदाहरन्ति स्म तपोमहिमसाक्षात्कृतधर्मस्थितयो मन्वादयो महर्षयः—

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
गण्यन्ते पांसवो भूमेर्गण्यन्ते वृष्टिबिन्दवः।
न गण्यते विधात्रापि धर्मसंरक्षणे फलम्॥

अपहरतः समर्थस्याप्युदासीनस्य तैरेव च परीतं(?) फलमुदाहृतम्।

१. 'नूतनपुरं' इति मुद्रितः पाठः. २. 'नन्दनसाम्यं' इति मुद्रितः पाठः. ३. 'जल्पेन' इति मुद्रितः पाठः. ४. 'समस्तं' इति मुद्रितः पाठः. ५. 'शनेश्चर' इति मुद्रितः पाठः. ६. 'राज्ञा' इति मुद्रितः पाठः.

'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिं वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
परदत्तां तु यो भूमिमुपहिंसेत्कदाचन ।
स बद्धो[1] वारुणैः पाशैः क्षिप्यते पूयशोणिते ॥
कुलानि तारयेत्कर्ता सप्त सप्त च सप्त च ।
अधोऽधः[2] पातयेद्धर्ता सप्त सप्त च सप्त च ॥
अपि गङ्गादितीर्थेषु हन्तुर्गामथवा द्विजम् ।
निष्कृतिः स्यान्न देवस्वब्रह्मस्वहरणे नृणाम् ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरशायिनः ।
कृष्णसर्पा हि जायन्ते देवद्रव्यापहारकाः ॥
कर्मणा मनसा वाचा यः समर्थोऽप्युपेक्षते ।
स स्यात्तदैव चण्डालः सर्वधर्मबहिष्कृतः ॥'

अत[3] एवाह रामचन्द्रः—

'सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ॥
मद्वंशजाः परमहीपतिवंशजा वा
पापादपेतमनसो भुवि भाविभूपाः ।
ये पालयन्ति मम धर्ममिमं समग्रं
तेषां मया विरचितोऽञ्जलिरेष मूर्ध्नि ॥'
बल्लालदेवनृपतेरादेशादग्निशर्मणा रचिता ।
शासनपद्धतिरेषा सारस्वतसार्वभौमेन ॥

(इण्डियन् आण्टिक्केरी २। २९६–३०३)

---

१. 'लब्धो' इति मुद्रितः पाठः. २. 'अहोऽधः' इति मुद्रितः पाठः. ३. 'अथ एवह' इति मुद्रितः पाठः.

# (१९)

## गुप्तवंशोद्भवस्य श्रीमहाभवगुप्तदेवस्य दानपत्रम् ।

स्वस्ति श्रीमहाराजसमावासिनः श्रीमतो विजयकटंकात् परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीशिवगुप्तदेवपादानुध्यातपरममाहेश्वरपरमभट्टारकमहाराजाधिराजपरमेश्वरसोमकुलतिलकत्रिकलिङ्गाधिपतिमहाराजाधिराजश्रीमहाभवगुप्तदेवः कुशली कोशलदेशे योधाविषयी(ये) दारण्डाग्रामे तथा खलाण्डलग्रामे ब्राह्मणान्संपूज्य तद्विषयीयान् यथाकालाध्यासिनः समाहूत(य) सन्निवीतनियुक्तकाधिकारिकदण्डप्रा(पा)शिकनाटभट्टपिशुनविधिकाररोधजनराणकराजवल्लभादीन् सर्वान् समाज्ञापयति—विदितमस्तु भवतां यथास्माभिरयं ग्रामः सनिधिः सोपनिधिः शतशोऽपराधः सर्वबाधाविवर्जितः सर्वोपरिकर्तृत्वदानसहितश्चतुःसीमाद्यायत्तः सामत्रकः सगर्तोषरजलस्थलसहितः प्रतिनिषिद्धनाटभट्ट(ट)प्रवेशष्टङ्कारीविनिर्गताय कोशले उर्वरावास्तव्याय भारद्वाजगोत्राय बार्हस्पत्याङ्गिरसप्रवराय वाजसनेयशाखाध्यायिने भट्टश्रीमहत्तमसाधारणाय भट्टश्रीशोभनसुताय सलिलधारापुरःसरमाचन्द्रतारकार्कज्योतिःसमकालोपभोगार्थं मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये ताम्रशासनेनाकरीकृत्य प्रतिपादितमित्यवगत्य संवरितभोगभागकरहिरण्यादिप्रत्ययमुपनयद्भिर्भवद्भिः सुखेन प्रतिवस्तव्यमिति । भाविभिश्च भूपतिभिर्दत्तिरियमस्मदीया धर्मगौरवादस्मदनुरोधात्स्वदत्तिरिवात्र पालनीया ।

तथा चोक्तं धर्मशास्त्रे—

'बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
मा भूदफलशङ्का वः परदत्तेति पार्थिवाः ।
स्वदत्तात्फलमानन्त्यं परदत्तानुपालने ॥
षष्टिवर्षसहस्राणि स्वर्गे मोदति भूमिदः ।
क्षितिपात्रान्नहर्तारद्वितयं(?) नरकं व्रजेत् ॥

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः।
यः काञ्चनं गां च महीं प्रदद्याद्दत्तास्त्रयस्तेन भवन्ति लोके ॥
आस्फोटयन्ति पितरः प्रवल्गन्ति पितामहाः।
भूमिदाता कुले जातः स नस्त्राता भविष्यति ॥
भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥
तडागानां सहस्राणि वाजपेयशतानि च।
गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति ॥
हरेत हारयेद्यस्तु मन्दबुद्धिस्तु मोहतः।
सवंशो(संबद्धो) वारुणैः पाशैस्तिर्यग्योनिं स गच्छति ॥
सुवर्णमेकं गामेकां भूमिमप्यर्धमङ्गुलाम्।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते ॥
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः।
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः।
सर्वानेवं भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥

सकलभूपालमौलिमालाविलग्नमाणिक्यमयूखपादाभिरञ्जिताङ्घ्रिं लब्धवर्णैः प्रचण्डदोर्दण्डमण्डलाग्रखण्डितारातिमत्तमातङ्गविमुक्तमुक्ताफलप्रसाधिताशेषबलं महीमण्डलम्—

यः साधारणनाम्नि मन्त्रितिलके विन्यस्य सर्वागमं
चौर्योद्धति(शौर्योदन्वति) तीव्रतेजसि धुरं राष्ट्रस्य विप्रोत्तमे।
नानाख्यानकवीश्वरामृतरसास्वादादमर्त्यस्फुर-
त्संतोषात्सुखमन्वभूदविरतं पृथ्वीशचूडामणिः ॥

ज्ञाताशेषार्थशास्त्रस्मृतिविमलधिया वेदवेदाङ्गविद्या-
शिक्षाकल्पेतिहासप्रकटसुरसवाक्प्राप्तभूयिष्ठधाम्ना ।
नाम्ना माधारणेन द्विजवरविधिना मन्त्रिणा यस्य राज्ये
निष्ठागम्भीरमूर्तिस्त्रिजगति विदितो धर्मकंदर्पदेवः ॥

परममाहेश्वरपरमभट्टारकमहाराजाधिराजपरमेश्वरसोमकुलतिलकत्रिक-लिङ्गाधिपतिश्रीमहाभवगुप्तदेवपादपद्मप्रवर्धमानविजयराज्ये एकत्रिंशत्तमे संवत्सरे मार्गसुदितिथौ त्रयोदश्यां यत्राङ्केनापि ३४ (३१) मार्गसुदि ३ (१३) लिखितमिदं त्रिफलीताम्रशासनं महासांधिविग्रही राणकश्रीम-ल्लदत्तप्रतिनिबद्धकायस्थश्रीमाहूकेन इयद्वर्णाङ्कितं स्वेनेति ।

प्रणीतं कोशलेन्द्रेण प्रतिबोध्य महत्तम[म्] ।
श्रीदत्तपुण्डरीकाक्षः शासनं ताम्रनिर्ण्णि(र्मि)तम् ॥
तन्निर्मितं माधवेन वा सृष्टं तेनेति ॥

(इण्डियन् आण्टिक्वेरी ५ । ५५–५७)

---

## (१६)

## चालुक्यवंशोद्भूतस्य श्रीपुलकेशिनः शिलालेखः ।

जयति भगवाञ्जिनेन्द्रो····ज····रक्षणजन्मनो यस्य ।
ज्ञानसमुद्रान्तर्गतमखिलं जगदन्तरीपमिव ॥
तदनु चिरमपरिचेयश्चुलुक्यकुलविपुलजलनिधिर्जयति ।
पृथिवीमौलिललामो यः प्रभवः पुरुषरत्नानाम् ॥
शूरे विदुषि च विभजन्दानं मानं च युगपदेकत्र ।
अविहितयाथातथ्यो जयति च सत्याश्रयः सुचिरम् ॥
पृथिवीवल्लभशब्दो येषामन्वर्थतां चिरं जातः ।
तद्वंशे(श्ये)षु जिगीषुषु तेषु बहुष्वप्यतीतेषु ॥
नानाहेतिशताभिघातपतितभ्रान्ताश्वपत्तिद्विपे
नृत्यद्भीमकबन्धखड्गकिरणज्वालासहस्रे रणे ।

लक्ष्मीर्भावितचापलापि च कृता शौर्येण येनात्मसा-
द्राजासीज्जयसिंहवल्लभ इति ख्यातश्चलुक्यान्वयः ॥
तदात्मजोऽभूद्रणरागनामा दिव्यानुभावो जगदेकनाथः ।
अमानुषत्वं किल यस्य लोकः सुप्तस्य जानाति वपुःप्रकर्षात् ॥
तस्याभवत्तनूजः पुलकेशी यः श्रितेन्दुकान्तिरपि ।
श्रीवल्लभोऽप्ययासीद्वातापिपुरीवधूवरताम् ॥
यत्त्रिवर्गपदवीमलं क्षितौ नानुगन्तुमधुनापि राजकम् ।
भूश्च येन हयमेधयाजिना प्रापितावभृथमज्जना बभौ ॥
नलमौर्यकदम्बकालरात्रिस्तनयस्तस्य बभूव कीर्तिवर्मा ।
परदारविवृत्तचित्तवृत्तेरपि धीर्यस्य रिपुश्रियानुकृष्टा ॥
रणपराक्रमलब्धजयश्रिया सपदि येन विरुग्णमशेषतः ।
नृपतिगन्धगजेन महौजसा पृथुकदम्बकदम्बकदम्बकम् ॥
तस्मिन्सुरेश्वरविभूतिगताभिलाषे
राजाभवत्तदनुजः किल मङ्गलीशः ।
यः पूर्वपश्चिमसमुद्रतटोषिताश्वः
सेनारजःपटविनिर्मितदिग्वितानः ॥
स्फुरन्मयूखैरसिदीपिकाशतैर्व्युदस्य मातङ्गतमिस्रसंचयम् ।
अवाप्तवान्यो रणरङ्गमन्दिरे कलच्चुरिश्रीललनापरिग्रहम् ॥
पुनरपि च जिघृक्षोः सैन्यमाक्रान्तसालं
रुचिरबहुपताकं रेवतीद्वीपमाशु ।
सपदि महदुदन्वत्तोयसंक्रान्तबिम्बं
वरुणबलमिवाभूदागतं यस्य वाचा ॥
तस्याग्रजस्य तनये नहुषानुभावे
लक्ष्म्या किलाभिलषिते पुलकेशिनाम्नि ।
सासूयमात्मनि भवन्तमतः पितृव्यं
ज्ञात्वापरुद्धचरितव्यवसायबुद्धौ ॥

---

१. कदम्बाः केचन क्षत्रियास्त एव कदम्बा वृक्षविशेषास्तेषां कदम्बकं समूहम्.

स यदुपचितमन्त्रोत्साहशक्तिप्रयोग-
क्षपितबलविशेषो मङ्गलीशः समन्तात् ।
स्वतनयगतराज्यारम्भयत्नेन सार्धं
निजमतनु च राज्यं जीवितं चोज्झति स्म ॥

तावत्तच्छत्रभङ्गे जगदखिलमरात्यन्धकारोपरुद्धं
यस्यासह्यप्रतापद्युतिततिभिरिवाक्रान्तमासीत्प्रभातम् ।
नृत्यद्विद्युत्पताकैः प्रजविनि मरुति क्षुण्णपर्यन्तभागै-
र्गर्जद्भिर्वारिवाहैरलिकुलमलिनं व्योम या(जा)तं कदा वा ॥

लब्ध्वा कालं भुवमुपगते जेतुमाप्यायिकाख्ये
गोविन्दे च द्विरदनिकरैरुत्तराम्भोधिरथ्याः ।
यस्यानीकैर्युधि भयरसज्ञत्वमेकः प्रयात-
स्तत्रावाप्तं फलमुपकृतस्यापरेणापि सद्यः ॥

वरदातुङ्गतरङ्गरङ्गविलसद्धंसानदीमेखलां
वनवासीमवमृद्नतः सुरपुरप्रस्पर्धिनीं संपदा ।
महता यस्य बलार्णवेन परितः संछादितोर्वीतलं
स्थलदुर्गं जलदुर्गतामिव गतं तत्तत्क्षणे पश्यताम् ॥

गङ्गाम्बु पीत्वा व्यसनानि सप्त हित्वा पुरोपार्जितसंपदोऽपि ।
यस्यानुभावोपनताः सदासन्नासन्नसेवामृतपानशौण्डाः ॥

कोङ्कणेषु यदादिष्टचण्डदण्डाम्बुवीचिभिः ।
उदस्तास्तरसा मौर्यपल्वलाम्बुसमृद्धयः ॥

अपरजलधेर्लक्ष्मीं यस्मिन्पुरीं पुरभित्प्रभे
मदगजघटाकारैर्नावां शतैरवमृद्नति ।
जलदपटलानीकाकीर्णं नवोत्पलमेचकं
जलनिधिरिव व्योम व्योम्नः समोऽभवदम्बुधिः ॥

प्रतापोपनता यस्य लाटमालवगूर्जराः ।
दण्डोपनतसामन्तचर्या वर्या इवाभवन् ॥

अपरिमितविभूतिस्फीतसामन्तसेना-
मुकुटमणिमयूखाक्रान्तपादारविन्दः ।
युधि पतितगजेन्द्रानीकबीभत्सभूतो
भयविगलितहर्षो येन चाकारि हर्षः ॥

भुवमुरुभिरनीकैः शासतो यस्य रेवा
विविधपुलिनशोभावन्ध्यविन्ध्योपकण्ठा ।
अधिकतरमराजत्स्वेन तेजोमहिम्ना
शिखरिभिरिभवर्ज्या वर्ष्मणां स्पर्धयेव ॥

विधिवदुपचिताभिः शक्तिभिः शक्रकल्प-
स्तिसृभिरपि गुणौघैः स्वैश्च माहाकुलाद्यैः ।
अनमदधिपतित्वं यो महाराष्ट्रकाणां
नवनवतिसहस्रग्रामभाजां त्रयाणाम् ॥

गृहिणां स्वगुणैस्त्रिवर्गतुङ्गा विहितान्यक्षितिपालमानभङ्गाः ।
अभवन्नुपजातभीतिलिङ्गा यदनीकेन सकोसलाः कलिङ्गाः ॥

पिष्टं पिष्टपुरं येन जातं दुर्गमदुर्गमम् ।
चित्रं यस्य कलेर्वृत्तं जातं दुर्गमदुर्गमम् ॥

संनद्धवारणघटास्थगितान्तरालं
नानायुधक्षतनरक्षतजाङ्गरागम् ।
आसीज्जलं यदवमर्दितमभ्रगर्भा-
कौणालमम्बरमिवोर्जितसांध्यरागम् ॥

उद्धूतामलचामरध्वजशतच्छत्रान्धकारैर्बलैः
शौर्योत्साहरसोद्धतारिमथनैर्मौलादिभिः षड्विधैः ।
आक्रान्तात्मबलोन्नतिं बलरजःसंछन्नकाञ्चीपुरः
प्राकारान्तरितप्रतापमकरोद्यः पल्लवानां पतिम् ॥

कावेरी द्रुतशफरीविलोलनेत्रा चोलानां सपदि जयोद्यतस्य यस्य ।
प्रश्च्योतन्मदगजसेतुरुद्धनीरा संस्पर्शं परिहरति स्म रत्नराशेः ॥

चोलेकरलपाण्ड्यानां योऽभूत्तत्र महर्द्धये ।
पल्लवानीकनीहारतुहिनेतरदीधितिः ॥'

उत्साहप्रभुमन्त्रशक्तिसहिते यस्मिन्समन्ताद्दिशो
जित्वा भूमिपतीन्विसृज्य महितानाराध्य देवद्विजान् ।
वातापीं नगरीं प्रविश्य नगरीमेकामिवोर्वीमिमां
चञ्चन्नीरधिनीरनीलपरिखां सत्याश्रये[1] शासति ॥

त्रिंशत्सु त्रिसहस्रेषु भारतादाहवादितः ।
सहाब्दशतयुक्तेषु श(ग)तेष्वब्देषु पञ्चसु (३७३५) ॥
पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च (५५६) ।
समासु समतीतासु शकानामपि भूभुजाम् ॥

तस्याम्बुधित्रयनिवारितशासनस्य
सत्याश्रयस्य परमाप्तवता प्रसादम् ।
शैलं जिनेन्द्रभवनं भवनं महिम्नां
निर्मापितं मतिमता रविकीर्तिनेदम् ॥

प्रशस्तेर्वसतेश्चास्या जिनस्य त्रिजगद्गुरोः ।
कर्ता कारयिता चापि रविकीर्तिः कृती स्वयम् ।

येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ॥

(इण्डिअन् आण्टिक्वेरी ५ । ६७–७१)

---

# (१७)

## वलभीप्रभोर्महाराजध्रुवसेनस्य दानपत्रम् ।

स्वस्ति वलभीतः प्रसभप्रणतामित्राणां मैत्रकाणामतुलबलसंपन्नमण्डलाभोगसंसक्तसंप्रहारशतलब्धप्रतापः प्रतापोपनतदानमानार्जवोपार्जितानुरागानुरक्तमौलभृतमित्रश्रेणीबलावाप्तराज्यश्रीः परममाहेश्वरः श्रीसेनापतिभट्टार्कः तस्य सुतस्तत्पादरजोरुणनतपवित्रीकृतशिराः शिरोवनतश-

---

१. सत्याश्रय इति पुलकेशिमहीपतेर्नामान्तरम्.

नृचूडामणिप्रभाविच्छुरितपादनखपङ्क्तिदीधितिः दीनानाथजनोपजीव्यमानविभवः परममाहेश्वरः सेनापतिधरसेनस्तस्यानुजस्तत्पादाभिप्रशस्तविमलमौलिमणिर्मन्वादिप्रणीतविधिविधानधर्मा धर्मराज इव विहितविनयव्यवस्थापद्धतिरखिलभुवनमण्डलाभोगस्वामिना परमस्वामिना स्वयमुपहितराज्याभिषेकमहाविश्राणनावपूतराज्यश्रीः परममाहेश्वरो महाराजद्रोणसिंहः सिंह इव तस्यानुजः स्वभुजबलबटानीकानामनेकविजयी शरणैषिणां शरणमववोद्धा शास्त्रार्थतत्त्वानां कल्पतरुरिव सुहृत्प्रणयिनां यथाभिलषितफलोपभोगदः परमभागवतः परमभट्टारकपादानुध्यातो महाराजध्रुवसेनः कुशली सर्वानेव स्वानायुक्तकविनियुक्तकद्राङ्गिकमहत्तरचाटभटध्रुवस्थानाधिकरणदण्डपाशिकादीनन्यांश्च यथासंवध्यमानकाननुदर्शयति । अस्तु वः संविदितम्—यथा मया हस्तकवप्राहरण्यं कुक्कुटग्रामे योतिलप्रत्ययसीतापादावर्तशतं कूपश्च हस्तकवप्रवास्तव्यब्राह्मणसत्रितिशर्मणे द्रोणायनसगोत्रायाथर्वणसब्रह्मचारिणे मातापित्रोः पुण्याप्यायनायात्मनश्चैहिकामुष्मिकयथाभिलषितफलावाप्तिनिमित्तमा चन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनं पुत्रपौत्रान्वयभोग्यं ब्रह्मदेयमनुज्ञातम् । अतोऽस्योचितया ब्रह्मदेयस्थित्या भुञ्जतः प्रदिशतः कर्षापयतः कृषतो वा न कैश्चित्स्वल्पाप्याबाधा कार्यास्मद्वंशजैरागामिनृपतिभिश्च । अनित्यान्यैश्वर्याण्यस्थिरं मानुष्यं चावेक्ष्य सामान्यं च भूमिदानफलमवगच्छद्भिरियमस्मदनुमतिरनुमन्तव्या । यश्चाच्छिन्द्यादाच्छिद्यमानं वानुमोदेत्स पञ्चभिर्महापातकैः सोपपातकैः संयुक्तः स्यात् । अपि चात्र व्यासगीतः श्लोको भवति—

'षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥'

स्वहस्तो मम महाराजध्रुवसेनस्य । दूतकः प्रतीहारमम्मकः । लिखितं किक्केन । [1]सं. २०७ कार्तिकसुदि ७ ।

(इण्डियन् आण्टिक्वेरी ५।२०५-२०६)

1. वलभीसंवत्सरोऽयम्.

## (१८)

## शिलाहारवंशोद्भवस्य श्रीछित्तराजदेवस्य दानपत्रम् ।

ॐ जयश्चाभ्युदयश्च ।

लभते सर्वकार्येषु पूजया गणनायकः । (?)
विघ्नं निघ्नन्स वः पायादपायाद्गणनायकः ॥
स वः पातु शिवो नित्यं यन्मौलौ भाति जाह्नवी ।
सुमेरुशिखरोद्गच्छदच्छचन्द्रकलोपमा ॥

जीमूतकेतुतनयो नियतं दयालु-
जीमूतवाहन इति त्रिजगत्प्रसिद्धः ।
देहं निजं तृणमिवाकलयन्परार्थे
यो रक्षति स्म गरुडात्किल शङ्खचूडम् ॥

तस्यान्वये नरपतिः समभूत्कपर्दी
शीलारवंशतिलको रिपुदर्पमर्दी ।
तस्मादभूच्च तनयः पुलसक्तिनामा
मार्तण्डमण्डलसमानसमिद्धधामा ॥

जातवानथ लघुः स कपर्दी सूनुरस्य सकलैररिवर्गैः ।
यद्भयेन सलिलाञ्जलिरुच्चैर्दीयते स्म निजराज्यसुखाय ॥

तस्मादभूच्च तनयो भुवनैकवीरः
श्रीवप्पुवन्त इति संगररङ्गवीरः ।
श्रीझञ्झ इत्यभवदस्य सुतः सुकीर्ति-
र्भ्राताथ गोग्गिनृपतिः समभूत्सुमूर्तिः ॥

तस्माद्विस्मयकारिहारिचरितप्रख्यातकीर्तिः सुतः
श्रीमान्वज्जडदेवभूपतिरभूद्भूचक्रचूडामणिः ।
दोर्दण्डैकबलस्य यस्य सहसा सङ्ग्रामरङ्गाङ्गणे
राज्यश्रीः स्वयमेव वक्षसि रतिं चक्रे मुरारेरिव ॥

जयन्त इव वृत्रारेः पुरारेरिव षण्मुखः ।
ततः श्रीगगनभृत्सूनुः सच्चरित्रोऽपराजितः ॥
कर्णस्त्यागेन यः साक्षात्सत्येन च युधिष्ठिरः ।
प्रतापाद्दीनमार्तण्डः कालदण्डश्च(कालोदण्डाच्च) यो द्विषाम् ॥
तस्मादभूद्वज्जडदेवनामा ततोऽग्रजः श्रीकेशिदेवश्च (?) ।
तस्यात्मजो वज्जडदेवसूनुः श्रीछित्तराजो नृपतिर्बभूव ।
शीलारवंशः शिशुनापि येन नीतः परामुन्नतिमुन्नतेन ॥

अतः स्वकीयपुण्योदयात्समधिगताशेषपञ्चमहाशब्दमहासामन्ताधिपतितगरपुरपरमेश्वरशिलाहारनरेन्द्रजीमूतवाहनान्वयप्रसूतसुवर्णगरुडध्वजसहजविद्याधरत्यागजगज्झम्पिमाण्डलिकशिखामणिशरणागतवज्रपञ्जरप्रभृतिसमस्तराजावलीसमलंकृतमहामण्डलेश्वरश्रीमच्छित्तराजदेवे निजभुजोपार्जितानेकमण्डलसमेतां पुरीप्रमुखचतुर्दशग्रामशतीमन्विताां समग्रकोङ्कणभुवं प्रसनुशासति तच्चैतद्राज्यचिन्ताभारमुद्वहत्सु सर्वाधिकारिश्रीनागणय्यसांधिविग्रहिकश्रीसीहपैयकर्णाटसांधिविग्रहिकश्रीकपर्दिश्रीकरणादिपञ्चप्रधानेषु सत्सु अस्मिन्काले प्रवर्तमाने स च महामण्डलेश्वरश्रीमच्छित्तराजदेवः सर्वानेव स्वसंबध्यमानकानन्यानपि समागामिराजपुत्रमन्त्रिपुरोहितामात्यप्रधानाप्रधाननैयोगिकांस्तथा राष्ट्रपतिविषयपतिनगरपतिग्रामपतिनियुक्तानियुक्तराजपुरुषजनपदांस्तथा हंयमननगरपौरत्रिवर्गप्रभृतींश्च प्रणतिपूजासत्कारसमादेशैः संदिशति । अस्तु वः संविदितम्—यथा 'चला विभूतिः क्षणभङ्गं(ङ्गि) यौवनं कृतान्तदन्तान्तरवर्ति जीवितम् ।' संसारः(रे) सहजजरामरणसाधारणं शरीरकम् । पवनचलितकमलिनीदलगतजललवतरलतरैव चायुषी(तरलतरमेव चायुः) इति मत्वा द्रढयन्ति दानफलम् । तथा चोक्तं भगवता व्यासेन—

'अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकत्रयं तेन भवेद्धि दत्तं यः काञ्चनं गां च महीं च दद्यात् ॥'

---

१. 'तथाप्यवज्ञा परलोकसाधने नृणामहो विस्मयकारि चेष्टितम्' इत्युत्तरार्धं सुभाषितावली.

इति धर्माधर्मविचारचारुचिरंतनमुनिवचनान्यवधार्य मातापित्रोरात्मनश्च श्रेयोर्थिना मया शकनृपकालातीतसंवत्सरशतेषु नवसु अष्टचत्वारिंशदधिकेषु क्षयसंवत्सरान्तर्गतकार्तिकशुद्धपञ्चदश्याम् यत्राङ्कतोऽपि संवत् ९४८ कार्तिकशुद्ध १५ रवौ संजाते आदित्यग्रहणपर्वणि सुतीर्थे स्नात्वा गगनैकचक्रचूडामणये कमलिनीकामुकाय भगवते सवित्रे नानाविधकुसुमश्लाघ्यमर्घ्यं दत्त्वा सकलसुरासुरगुरुत्रैलोक्यस्वामिनं भगवन्तमुमापतिमभ्यर्च्य यजनयाजनाध्ययनाध्यापनादिषट्कर्मनिरताय क्रतुक्रियाकाण्डशौण्डाय पाराशरगोत्राय च्छन्दोगशाखिने महाब्राह्मणाय आमदेवैयाय विप्रनोडमैयसुताय यजनयाजनाध्ययनाध्यापनादिषट्कर्मकरणाय आगताभ्यागतनित्यनैमित्तिकसंव्यवहारार्थं बलिं चरुकवैश्वदेवाग्निहोत्रक्रतुक्रियाद्युपसर्पणार्थं स्वपरिग्रहपोषणार्थं च श्रीस्थानकाभ्यन्तरषट्षष्टी(ष्टि)विषयान्तःपाति नोउरग्रामान्तर्वर्ति चोडणिभट्टक्षेत्रम् यस्य चाघाटनानि—पूर्वतः गोंवणिमर्यादा, दक्षिणतः गोरपवलीमर्यादा, पश्चिमतो राजपथः, पूर्वोत्तरतो गोंवणिमर्यादा, एवं चतुराघाटनोपलक्षितं ससीमापर्यन्तं समस्तोत्पत्तिसंयुक्तं अचाटभटप्रवेश्यं अनादेश्यमनासेध्यं उदकातिसर्गेण नमस्यावृत्त्या परमया भक्त्या प्रतिपादितम्। तदस्य सान्वयबन्धोरपि भुञ्जतो भोजयतो वा कृषतः कर्षयतो वा न केनापि परिपन्थना करणीया। यत उक्तमेव महामुनिभिः—

'बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥'
'दत्त्वा भूमिं भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः॥'

इति महर्षिवचनान्यवधार्य सर्वैरपि समागामिभिर्भूपालैः पालनधर्मफललोभ एव कलनीयः। न पुनस्तल्लोपनपापकलङ्काग्रेसरेण केनापि भवितव्यम्। यस्त्वेवमभ्यर्थितोऽपि लोभादज्ञानतिमिरपटलावृतमतिराच्छिन्द्यादाच्छिद्यमानमनुमोदेत वा स पञ्चभिरपि पातकैरुपपातकैश्च लिप्तो

रौरवमहारौरवान्धतामिस्रादिनरकांश्चिरमनुभविष्यति । तथा चोक्तं व्यासेन—

'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा कृमिभिः सह पच्यते ॥'

यथा चैतदेवं शासनदाता लेखकहस्तेन स्वमतमारोपयति। यथा—मतं मम महामण्डलेश्वरश्रीछित्तराजदेवस्य महामण्डलेश्वरश्रीमद्वज्जडदेवराजसूनोर्यदत्र शासने लिखितम् । लिखितं चैतन्मया श्रीमद्राजाज्ञया भाण्डागारसेन जोगपैयेन भाण्डागारसेनमहाकविश्रीनागलै(पै)यभ्रातृसुतेन । यदत्रोनाक्षरमधिकाक्षरं वा तत्सर्वं प्रमाणमिति । श्रीर्भवतु ।

(इण्डियन् आण्टिक्वेरी ५।२७७–२७९)

---

# (१९)

## श्रीविष्णुगोपवर्मणो महीपतेर्दानपत्रम् ।

जितं भगवता ॥ श्रीविजयपलक्कदस्थानात् परमब्रह्मण्यस्य स्वबाहुबलार्जितोर्जितक्षात्रतपोनिधेः विहितसर्वमर्यादस्य स्थितिस्थितस्यामितात्मनो महाराजस्य श्रीस्कन्दवर्मणः प्रपौत्रस्यार्चितशक्तिसिद्धिसंपन्नस्य प्रतापोपनतराजमण्डलस्य महाराजस्य वसुधातलैकवीरस्य श्रीवीरवर्मणः पौत्रस्य देवद्विजगुरुवृद्धोपचायिनो विवृद्धविनयस्यानेकगोहिरण्यभूम्यादिप्रदानैः प्रवृद्धधर्मसंचयस्य प्रजापालनदक्षस्य लोकपालानां पञ्चमस्य लोकपालस्य सत्यात्मनो महात्मनो महाराजस्य श्रीस्कन्दवर्मणः पुत्रस्य भगवद्भक्तिसद्भावसंभावितसर्वकल्याणस्य प्रजासंरञ्जनपरिपालनोद्योगसततसत्रव्रतदीक्षितस्य अनेकसमरसाहसावमर्दलब्धविजययशःप्रकाशस्य कलियुगदोषावसन्नधर्मोद्धरणनित्यसंनद्धस्य राजर्षिगुणसर्वसंदोहविजिगीषोर्धर्मविजिगीषोर्भगवत्पादानुध्यातस्य बप्पभट्टारकमहाराजपादभक्तस्य परमभागवतस्य भारद्वाजसगोत्रस्य स्वविक्रमाक्रान्तान्यनृपश्रीनिलयानां यथावदाहृताश्वमेधानां पल्लवानां धर्मयुवमहाराजस्य श्रीविष्णुगोपवर्मणो वचनेन मुण्डराष्ट्रे उरुवपल्लिये ग्रामेयका वक्तव्याः—एतस्मिन्ग्रामसीमे

द्विशतं सि(सी)मनिवर्तनानि। एतेषां निवर्तनानामवधयः—अपरदिशि कण्डुकूरग्रामस्य सीमावधिः। दक्षिणदिशि सुप्रयोगनदी अवधिः। पूर्वदिशि अवधिः पूर्वदक्षिणोत्तरं महापथपार्श्वे शिला। एतस्या उत्तरं गत्वा चिञ्चावृक्षः। तत उत्तरं गत्वा कुरुपूरग्रामस्य केण्डुकूरग्रामस्य च पथि शिला। तत उत्तरं गत्वा शिलोपलयम्। तत उत्तरं गत्वा कुरुपूरग्रामे ब्राह्मणानां हलक्षेत्रस्यावधौ शिला। उत्तरदिश्यवधिः शिलोपलयवृतो महाचिञ्चावृक्षः। ततः अपरदिशं गत्वा कोण्डुमुरुवुडुग्रामस्य सीमान्तमवधिः। एवं चतुर्णां सीमावधीनां मध्यसीमस्य ताद्विशतं निवर्तनानि केण्डुकूरे विष्णुवर्मसेनापतिकृतविष्णुहारदेवकुलाय देवभोगं कृत्वा अष्टादशजातिभिः परिहारैरुपेतं अस्मदायुर्बलवर्धनीयमस्माभिः संप्रदत्तम्। तदवगम्य तस्मिन्विषये सर्वायुक्तकाः सर्वनियुक्ता राजवल्लभाः संचरन्तकाश्च तत्सीमं सर्वपरिहारैः परिहरन्तु परिहारयन्तु च। यश्चेदमस्मच्छासनमतिक्रामेत्स पापः शरीरदण्डमर्हति। अपि चापि श्लोकाः—

'भूमिदानात्परं दानं न भूतं न भविष्यति।
तस्यैव हरणपापान्(हरणात्पापं) न भूतं न भविष्यति॥'
'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
गवां शतसहस्रस्य हन्तुः पिबति दुष्कृतम्॥'

सिंहवर्ममहाराजस्य विजयसंवत्सरे एकादशे पौष्य(ष)मासे कृष्णपक्षे दशम्यां मया दत्ता ताम्रपट्टिका॥

(इण्डियन् आण्टिक्केरी ५।५१–५२)

---

## (२०)

### अविनीतमहीपतेर्दानपत्रम्।

जितं भगवता गतघनगगनाभेन पद्मनाभेन श्रीमज्जान्हवेयकुलामलव्योमावभासनभास्करस्य स्वखड्गैकप्रहारखण्डितमहाशिलास्तम्भलब्धबलस्वस्तिः (?) पराक्रमयशः(शसः) दारुणारिगणविदारणरणोपलब्धव्रणविभूषणविभूषितस्य काण्वायनसगोत्रस्य श्रीमत्कोगणिवर्मधर्ममहाधि-

राजस्य पुत्रस्य पितुरन्वागतगुणयुक्तस्य विद्याविनयविनीतस्य सम्य[क्]प्रजापालनमात्राधिगतराज्यप्रयोजनस्य नानाशास्त्रार्त(र्थ)सद्भावाधिगमप्रणीतमतिविशेषस्य विद्वत्काञ्चननिकषोपलभूतस्य विशेषतोऽप्यनवशेषस्य (?) नीतिशास्त्रस्य वक्तृप्रयोक्तृकुशलस्य सुविभक्तभक्तभृत्यजनस्य दत्तकसूत्रवृत्तेः प्रणेतुः श्रीमन्माधवमहाधिराजस्य पुत्रस्य पितृपितामहगुणयुक्तस्य अनेकचतुर्दन्तयुद्धावाप्तचतुरुदधिसलिलास्वादितयशसः समदद्विरदतुरगारोहणातिशयोत्पन्नतेजसो धनुरभियोगसंपादितसंपद्विशेषस्य श्रीमद्धरिवर्ममहाधिराजस्य पुत्रस्य गुरुगोब्राह्मणपूजकस्य नारायणचरणानुध्यातस्य श्रीमद्विष्णुगोपमहाधिराजस्य पुत्रस्य त्र्यम्बकचरणाम्भोरुहरजःपवित्रीकृतोत्तमाङ्गस्य व्यायामोद्वृत्तपीनकठिनभुजद्वयस्य स्वभुजबलपराक्रमक्रयक्रीतराज्यस्य क्षुत्शा(क्षा)मोष्ठपिशिताशनप्रीतिकरानिशितधारासे[:] (?) चिरप्रनष्टदेवभोगब्रह्मादेयविसर्गअयणकारिण[:] (?) कलियुगबलपङ्कावसन्नधर्मवृषोद्धरणनित्यसंनद्धस्य श्रीमन्माधवमहाधिराजस्य पुत्रस्य अविच्छिन्नाश्वमेधावभृता(था)भिषिक्तश्रीमत्कादम्बकुलगगनगभस्तिमालिनः श्रीकृष्णवर्ममहाधिराजस्य प्रियभागिनेयस्य जननि(नी)देवताङ्कपर्यङ्क एवाधिगतराज्याभिषेकस्य विजृम्भमाणशक्तित्रयस्य परस्परानवमद्दि(र्दे)नोपभुज्यमानत्रिवर्गसारस्य असंभ्रमावनमितसमस्तसामन्तमण्डलस्य निरन्तरप्रेमबहुमानानुरक्तप्रकृतिवर्गस्य विद्याविनयातिशयपरिभू[षि]तान्तरात्मन[:] कार्तयुगीयराजचरितावलम्बिन[:] अनेकसमरविजयोपार्जितविपुलयश[सः] क्षीरोदैकार्णवीकृतभुवनत्रयस्य निरवग्रहप्रदानशौर्यस्य अविषह्यपराक्रमाक्रान्तप्रतिराजमस्तकार्पिताप्रतिहतशासनस्य अनेकमुखाभिवर्धमानविभवोदयपराजितद्रविणपतेः प्रतीतानेकगुणनिधानभूतस्य विद्वत्सु प्रथमगण्यस्य प्रणायिजनहृदयानन्दनस्य मर्यादालङ्घनालं(नु)कृतरत्नाकरवृत्तस्य यथार्हदण्डितयानुकृतवैवस्वतस्य प्रतापातिशयानुग(कृ)त विवस्वतो वैवस्वतस्य वा मनोर्वर्णाश्रमाभिरक्षिणे(णो) दक्षिणदिशामभिगोप्तुं पर्य्याप्तु(प्त)वतः (?) प्रातिजनीनस्य सुप्रजसः श्रीमत्कोगणिमहाधिराजस्य अविनीतनामपुत्रेण पुन्ना-

डराजस्कन्दवर्मप्रियपुत्रिकाजन्मना स्वगुरुणानुगामिना पित्रा परमुतस-मावर्जितयापिलक्ष्या(क्ष्म्या ?) स्वयमभिप्रातिया(त्या) लिङ्गितवक्षस्त(क्षः-स्थ)लेन विजृम्भमाणशक्तित्रयोपनमितसमस्तसामन्तमण्डलेन अन्दरि-य-आलन्तूर-पौरुलरे अपेनगराद्यनेकसमरमखमुखाहुतप्रपातशूरपुरुषप-शूपहारविघसविहस्तीकृतान्ताग्निमुखेन श्रीमत्कोगणिवृद्धराजेन दुर्वि-नीतनामधेयेन समस्तपान्नाडपुन्नाडाधिपतिना वैवस्वतेनेव मनुना वर्णा-श्रमामिलक्षणां दाक्षिणां दिशमभिगोप्तुं परिया(र्या)प्तवता प्रातिजानितेन सुप्रजसा आत्मनः प्रवर्धमानविजयैश्वर्ये पञ्चत्रिंशद्विजयसंवत्सरे (शकाब्दे ४३९) प्रवर्तमाने श्रीमद्वाल्मीकिनाम्नि जगत्सूर्यवंशखरमहादेवाख्यका-स्य(श्य)पसगोत्रवाजसैन्यवादेयश्रीमद्देवशर्मणां केललेनाम्ना वेम्पुरी-श्वस्तीन(?)मुदकपूर्वं दत्त[म्] ईशान्यदिशा आपक्षेत्रं चतारिखण्डि कृष्णता(त)टाकं आपक्षेत्रं ऊर्ध्वत्रिखण्डि अध आपक्षेत्रं षट्खण्डि पेन्तनाडिपूर्वदिशां क्षेत्रं पञ्चदशखण्डि दक्षिणदिश(शि) महावृक्ष अग्नि अश्वत्तं(त्थं) ईशानायदिशा जमुवृक्षं पुनः पुन ईशानायदिशा नकुले त-टाकवरुणादिशां क्षेत्रं द्वादशखण्डि वायव्यदिशा महातटाक आपक्षेत्रं सप्तखण्डि एतेन महादेवादिव्यदत्तम् । अपि चात्र मनुगीतो(ताः) श्लोको(काः)—

'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिं वर्षसहस्राणि घोरे तमसि वर्तते ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य [तस्य] तदा फलम् ॥
स्वं दातुं सुमहच्छक्यं दुःखमन्यत्र पालनम् ।
दानं वा पालनं वेति दानाच्छ्रेयोऽनुपालनम् ॥
अद्भिर्दत्तं त्रिभिर्भुक्तं षड्भिश्च प्रतिपालनम्(लितम्) ।
एतानि न निवर्तन्ते पूर्वराजकृतानि च ॥'

(इण्डियन् आण्टिक्केरी ५।१३८–१३९)

---

# (२१)

## ग्वाल्हेरनगरोपकण्ठस्थितगिरिदुर्गे पद्मनाथदेवालये समुत्कीर्णा प्रशस्तिः[1] ।

ॐ नमः पद्मनाथाय[2] ॥

हर्षोत्फुल्लविलोचनैर्दिशि दिशि प्रोद्गीयमानं जनै-
मैंदिन्यां विततं ततो हरिहरब्रह्मास्पदानि क्रमात् ।
श्वेतीकृत्य यदात्मना परिणतं श्रीपद्मभूभृद्यशः
पायादेष जगन्ति निर्मलवपुः श्वेतानिरुद्धश्चिरम् ॥ १ ॥

मौलिन्यस्तमहानीलशकलः पातु वो हरिः ।
दर्शयन्निव केशस्थनवजीमूतकर्णिकाम् ॥ २ ॥

मुक्ताशैलच्छलेन क्षितितिलकयशोराशिना निर्मितोऽयं
देवः पायादुषायाः पतिरतिधवलस्वच्छकान्तिर्जगन्ति ।
मन्वानः सर्वथैव त्रिभुवनविदितं श्यामतापह्नवं यः
शङ्के स्वं वर्णचिह्नं मुकुटतटमिलन्नीलकान्त्या बिभर्ति ॥ ३ ॥

इदं मौलिन्यस्तं न भवति महानीलशकलं
न मुक्ताशैलेन स्फुरति घटितश्चैष भगवान् ।

---

१. प्रशस्तिरियं सुप्रसिद्धविद्वद्वरराजेन्द्रलालमित्रेण 'इण्डो-आर्यन्स्' (Indo-Aryans) नाम्नि स्वग्रन्थे द्वितीयभागे (३७०-३७७ पृष्ठेषु) १८८१ मिते खिस्ताब्दे मुद्रिता. तत्र चात्रुटितानि शुद्धानि च विरलान्येव पद्यानि दृश्यन्ते. बहूनि च पद्यानि निःशेषमेव गलितानि सन्ति. पुनर्भट्टकीलहार्नेन १८८६ मिते खिस्ताब्दे 'इण्डियन्-आण्टिक्वेरी'मध्ये (१५ । ३३-४७) मुद्रिता. तन्मुद्रणं समीचीनमेव. अथ चास्मिन्नेव वर्षे ग्वाल्हेरमहाराजाश्रितपौराणिकभट्टश्रीपुरुषोत्तमशास्त्रिभिरेकमेतत्प्रशस्तिप्रतिरूपकमस्मभ्यं प्रहितम्. तदपि केनचिद्वैधेयधुरीणेन लिखितमित्यशुद्धिप्रचुरमेव. किंतु तत्राक्षराणि पद्यानि वा न गलितानि सन्ति. अस्माभिरत्र भट्टकीलहार्नमुद्रिता क-नाम्ना, ग्वाल्हेरनगरागता च प्रशस्तिः ग-नाम्ना व्यवहृतास्ति. राजेन्द्रलालमित्रमुद्रितायास्तु नोपयोगः कृतः. २. पद्मपालमहीपतिस्थापितत्वात्पद्मनाथ इति नाम.

उपाकर्णोत्तंसीकरणसुभगं नीलनलिनं
वहत्यद्याप्यस्याश्चिरविरहपाण्डूकृततनुः ॥ ४ ॥

आसीद्वीर्यलघूकृतेन्द्रतनयो निःशेषभूमीभृतां
वन्द्यः कच्छपघातवंशतिलकः क्षोणीपतिर्लक्ष्मणः ।
यः कोदण्डधरः प्रजाहितकरश्चक्रे स्वचित्तानुगां
गामेकः पृथुवत्पृथूनपि हठादुत्पाट्य पृथ्वीभृतः ॥ ५ ॥

तस्माद्वज्रधरोपमः क्षितिपतिः श्रीवज्रदामाभव-
द्दुर्वारोर्जितबाहुदण्डविजिते गोपाद्रिदुर्गे युधा ।
निर्व्याजं परिभूय गाधिनगराधीशप्रतापोदयं
यद्वीरव्रतसूचकः समभवत्प्रोद्धोषणाडिण्डिमः ॥ ६ ॥

न तुलितः किल केनचिदप्यहं जगति भूमिभृतेति कुतूहलात् ।
तुलयति स्म तुलापुरुषैः स्वयं स्वमिह यः सुविशुद्धहिरण्मयैः ॥ ७ ॥

ततो रिपुध्वान्तसहस्रधामा नृपोऽभवन्मङ्गलराजनामा ।
यै ईश्वरैकप्रणतिप्रभावान्महीश्वराणां प्रणतः सहस्रैः ॥ ८ ॥

श्रीकीर्तिराजो नृपतिस्ततोऽभूद्यस्य प्रयाणेषु चमूसमुत्थैः ।
धूलीवितानैः सममेव चित्रं मित्रस्य वैवर्ण्यमभूद्विषश्च ॥ ९ ॥

किं ब्रूमोऽस्य कथाद्भुतं नरपतेरेतेन शौर्याब्धिना
दण्डो मालवभूमिपस्य समरे संख्यामतीतोजितः ।
यस्मिन्भङ्गमुपागते दिशि दिशि त्रासात्कराग्रच्युतै-
र्ग्रामीणाः स्वगृहाणि कुन्तनिकरैः संछादयांचक्रिरे ॥ १० ॥

अद्भुतः सिंहपानीयनगरे येन कारितः ।
कीर्तिस्तम्भ इवाभाति प्रासादः पार्वतीपतेः ॥ ११ ॥

---

१. गोपाद्रिरिति ग्वाल्हेरसमीपवर्तिनः पर्वतस्य नाम. २. 'युवा' ग. ३. 'वैरिनगरा' ग. ४. 'पूरकः समचरत्' क. ५. 'यश्चेश्वरैक' ग. ६. 'शतीतोर्जित' ग. ७. 'रङ्गमुपागते' ग.

तस्मादजायत म[1]हामतिमूलदेवः
पृथ्वीपतिर्भुवनपाल इति प्रसिद्धः ।
आनन्दयञ्जगदनिन्दितचक्रवर्ति-
चिह्नैरलंकृततनुर्मनुतुल्यकीर्तिः ॥ १२ ॥

यस्य [2]ध्वस्तारिभूपालां सर्वां पालयतः प्रभोः ।
भुवं त्रैलोक्यमल्लस्य निःसपत्नमभूज्जगत् ॥ १३ ॥
[3]राज्ञी देवव्रता तस्य हरेर्लक्ष्मीरिवाभवत् ।
तस्यां **श्रीदेवपालो**ऽभूत्तनयस्तस्य भूपतेः ॥ १४ ॥
त्यागेन कर्णमजयत्पार्थं कोदण्डविद्यया ।
धर्मराजं च सत्येन स सुधा विनयाश्रयः ॥ १५ ॥

सूनुस्तस्य विशुद्धबुद्धिविभवः पुण्यैः प्रजानामभू-
न्मांधातेव स चक्रवर्तितिलकः **श्रीपद्मपालः** प्रभुः ।
मत्स्वाम्येऽपि करप्रवृत्तिरपरस्येतीव यश्चिन्तय-
न्दिग्यात्रासु मुहुः खरांशुमरुणत्सान्द्रैश्चमूरेणुभिः ॥ १६ ॥
कृत्वान्याः स्ववशे दिशः क्रमवशादाशां गतैर्दक्षिणा-
मुत्क्षिप्ताचलसंनिभानविरतं यत्सैन्यवाजिव्रजैः ।
उद्धूतान्पततः पयोधिमभितः संप्रेक्ष्य रेणूत्करा-
न्भूयोऽप्युद्भटसेतुबन्धनधिया त्रस्यन्ति नक्तंचराः ॥ १७ ॥
यस्येन्दुद्युतिसुन्दरेण यशसा नीते सुराणां गणे
वैवर्ण्यं [4]भ्रमशीलखण्डनभयादप्राप्नुवन्तः प्रियान् ।

---

१. महामत्या मूलदेवतुल्यः. कलाङ्कुरापरनामा निखिलकलावेत्ता विक्रमादित्यसभ्यो मूलदेवः कथासरित्सागरादिषु प्रसिद्ध एव. भट्टकीलहार्नस्तु 'मूलदेव इति महीपतेर्नाम, भुवनपालस्त्रैलोक्यमल्लश्चेति नामद्वयमपि तस्यैव' इति वदति. वस्तुतस्तु 'महामतिमूलदेवः' इति भुवनपालस्य विशेषणरूपमेवेति ज्ञेयम्. तथा च समयमातृकायां क्षेमेन्द्रप्रयोगः— 'श्रीगुप्तो नाम धूर्तः सकलकलिकलाकल्पनामूलदेवः' (६।२९). एवं त्रैलोक्यमल्ल इत्यपि भुवनपालस्य विशेषणमेव. २. 'ध्वस्तान्यभूपालां' क. ३. 'पत्नी' ग. ४. 'शुचिशील' ग.

नूनं शक्रपुरःसरामरवधूसंघाः श्रिये सांप्रतं
गौर्यै च स्पृहयन्ति ये प्रथमतः पत्युर्वपुःसंश्रिते ॥ १८ ॥
कै[1]र्दृष्टाः क्व समस्तवाञ्छितफलभ्राजिष्णवः पादपा
गावः कामदुघाश्च कैः क्व मणयः कैश्चिन्तितार्थप्रदाः ।
पूर्णाः कस्य मनोरथा इह न के[2] पत्यामुना पूरिता
[3]वीरोऽधोऽनयदस्य(?) तद्गुणवतः [4]कल्पद्रुमादीनपि ॥ १९ ॥
[5]स्तुत्वा न पद्मनृपतिं [6]परिरक्षिता भूः
प्राप्तोऽन्यथापि यदसौ बत [7]नग्नभावः ।
दौःस्थ्यान्निरम्बरतनुर्विपिनेष्वशोच-
[8]द्यस्य प्रतिक्षणमिति प्रतिपन्थिसार्थः ॥ २० ॥
भ्रमः कुलालचक्रेषु लोभः पुण्यार्जनेष्वभूत् ।
काठिन्यं कुचकुम्भेषु [9]यस्मिञ्शासति मेदिनीम् ॥ २१ ॥
[10]असंमतोदूढगुणस्य पीडा साधुर्न निस्त्रिंश[11]परिग्रहोऽपि ।
इत्याललम्बे न धनुर्न चासिं तथापि यो वैरिगणं जिगाय ॥ २२ ॥
सद्यः स्रुतास्रपृषत[12]व्यतिकीर्णभूषु
वैरि[13]द्विपाधिपशिरोमणिभिः समन्तात् ।
लोकानुरागयशसामिव बीजवापं
विस्तारयां [14]यदसिरास रणाजिरेषु ॥ २३ ॥
वने यदरिनारीणां हैमनीरजनिश्चयः (?) ।
भृङ्गाणां [15]तन्मुखेनातो हैमनीरजनिश्चयः ॥ २४ ॥
स विमृश्य नदीपूरगत्वरे संपदायुषी ।
पूर्तधर्मे मतिं चक्रे जिघृक्षु[16]रनयोः फलम् ॥ २५ ॥

---

१. 'दृष्टाः' क. २. 'कैः' क. ३. 'वीरोद्धानतटस्य' क. ४. 'कल्पद्रुमादीन्यपि' क. ५. 'श्रुत्वा' क. ६. 'परिरक्षितारं' ग. ७. नग्ना बन्दिनोऽपि. 'नम्रभावः' ग. ८. 'यस्मात्' क. ९. 'तस्मिन्' क. १०. उदूढगुणस्य गुणवतः पुरुषस्य धनुषश्च पीडा असंमता. ११. 'परिज्ञतापि' क. १२. 'व्यतिकीर्णरूपो' क. १३. 'वैरिद्विषाधिप' क. १४. यस्य खड्गो लोकानुरागयशसामिव बीजवापं विस्तारयामास. १५. 'तन्मुखेष्वेव' ग. १६. अनयोः संपदायुषोः.

प्रजाभर्त्रा[1] तेन क्षितितिलकभूतेन सदनं
हरेर्धर्मज्ञेन त्रिदशसदृशा कारितमदः ।
वदाम्यस्योच्चैस्त्वं कथमिव गिरा यस्य शिखरं
समारूढः सिंहो मृगमिव मृगाङ्कस्थमशितुम् ॥ २६ ॥
प्रासादस्यास्य[2] शश्वद्विधुधरशिखरि[3]स्पर्धिनो हैममण्डं
दण्डाग्रात्[4]पावनीयं शशधरधवला वैजयन्ती पतन्ती ।
निर्व्यातं[5] भाति भूतिच्छुरितनिजतनोर्देवदेवस्य शंभोः
स्वर्गाद्गङ्गेव पिङ्गस्फुटविकटजटाजूटमध्यं विशन्ती ॥ २७ ॥
तदेतद्ब्रह्माण्डं स इह भविता पङ्कजभवः
पुनर्य्ये वोढास्मो(रो) वयमिह विमानेन वियति ।
सुवर्णाण्डं हंसास्तदिदमुररीकृत्य सकलं
ध्रुवं संसेवन्ते हरिसदनमूर्ध्नि[6] स्थितममी ॥ २८ ॥
तुङ्गिम्ना कनकाचलः शुभविधावन्तःस्थितश्रीपति-[7]
र्बिभ्राणो द्विजसत्तमानुदधिजावासो नृसिंहान्वितः ।
निर्मातास्य वृतः समस्तविबुधैर्लब्धप्रतिष्ठैरयं
प्रासादश्च धरातले सममहो कल्पं हरेः कल्पताम् ॥ २९ ॥
देवेऽर्धसिद्धे द्विजपुंगवेषु[8] प्रतिष्ठितेष्वष्टसु[9] पद्मपालः ।
युवैव दैवप्रतिकूलभावात्संक्रन्दनार्धासन[10]भाग्बभूव ॥ ३० ॥
तस्य भ्राता नृपतिरभवत्सूर्यपालस्य सूनुः
श्रीगोपाद्रौ सुकृतनिलयः **श्रीमहीपालदेवः** ।
यं प्राप्यैव प्रथितयशसं तावभूतां सनाथौ
शौर्यत्यागौ हरिरविसुताभावदुःस्थौ[11] चिरेण ॥ ३१ ॥

---

१. 'भवनं' क. २. 'प्रासादस्योत्पतन्ती विधु' ग. ३. कैलासतुल्यस्य. ४. 'शृङ्गाग्रात्' ग. ५. 'निर्भ्रान्तं' ग. ६. 'उच्चैः स्थितं' क. ७. 'सममवच्चान्तःस्थितश्रीपतिः' ग. ८. 'देवेन्द्रसिद्धद्विज' ग. ९. 'प्रतिष्ठितेष्वेषु स' ग. १०. 'संक्रन्दनाङ्कासन' क. ११. अर्जुनकर्णवियोगदुःखितौ शौर्यत्यागौ.

सृष्टिं कुर्वन्नमात्यानां विप्राणां स नृपः स्थितिम् ।
प्रलयं विद्विषामासीद्ब्रह्मोपेन्द्रहरात्मकः ॥ ३२ ॥
यत्र धामनिधौ राज्ञि पालयत्यवनीतलम् ।
न भास्वान्भास्करादन्यो न राजान्यो विधोरभूत् ॥ ३३ ॥
कृताभिषेकं सद्वृत्तैरुपविष्टं नृपासने ।
यमुदारपदैरेवं तुष्टुवुः सूतमागधाः ॥ ३४ ॥

'त्वामुद्वहन्ति शिरसा खलु राजहंसाः
सृष्टास्त्वया पुनरिमाः समयावसन्नाः ।
नाथ प्रजाः सुमनसां प्रथमोऽसि कोऽसि
त्वं सिद्धवीररस तामरसोद्भवस्य ॥ ३५ ॥'

लक्ष्मीपतिस्त्वमसि पङ्कजचक्रचिह्नं
पाणिद्वयं वहसि भूप भुवं बिभर्षि ।
श्यामं वपुः प्रथयसि स्थितिहेतुरेक-
स्त्वं कोऽसि नीतिविजितोद्धव माधवस्य ॥ ३६ ॥

त्वं पालयस्यनिशमर्थिजनस्य कामं
रामः श्रिया त्वमसि नाथ गुणैरनन्तः ।
संकर्षणः समिति विद्विषदायुषस्त्वं
त्वं कोऽसि सच्चरितहाल हलायुधस्य ॥ ३७ ॥

ख्याता रतिस्तव निजप्रमदासु नित्यं
रूपं तवातिशयविस्मयकारि देव ।

---

१. 'विशां वै' ग. २. विद्विषां प्रलयं कुर्वन्नासीत्. ३. 'गायनाः' क. ४. इतः प्रभृति षड्विंशतिपद्यानां भट्टकीलहार्नेन इङ्गिशभाषान्तरं न विहितम्. ५. 'नीतिविजितोद्भव' क. नीत्या विजित उद्धवो येन. . श्रीकृष्णामात्यो नीतिविच्चोद्धव आसीदिति शिशुपालवधादौ व्यक्तमेव. ६. कामपाल इति बलदेवस्य नामान्तरमपि. ७. अनन्तः शेषोऽपि. बलदेवः शेषावतार इति प्रसिद्धिः. ८. सच्चरितैर्हालो द्वितीयः सातवाहनमहीपतिरेवेति तात्पर्यम्; बलदेवपक्षे तु सम्यक् चरिता हाला सुरा येन. ९. रतिः कामदेवस्य भार्यापि.

त्वं [1]मीनचिह्न [2]पुरुषोत्तमसंभवोऽसि
कस्त्वं क्षितीशवर [3]शम्बरसूदनस्य ॥ ३८ ॥
[4]भूभृत्सुतापतिरसि द्विषतां [5]पुराणां
भेत्ता त्वमीश [6]वृषपोषरतोऽसि नित्यम् ।
[7]भूतिं दधास्यमलैश्[8]चन्द्रविभूषिताङ्गः
कस्त्वं सदम्बुजा[9]दिवाकर शंकरस्य ॥ ३९ ॥
त्वं तेजसा [10]शिखिनमिद्धमधः करोषि
[11]शक्तिं दधासि नरदेव [12]विपत्तिहन्त्रीम् ।
त्वं [13]तारकं रिपुबलस्य बलान्निहंसि
कस्त्वं [14]नवीनबल [15]नीलगलध्वजस्य ॥ ४० ॥
त्वं [16]वज्रभृत्त्वमसि [17]पक्षभिदप्यशेष-
[18]भूमीभृतां [19]विबुधवन्द्य [20]गुरुप्रियोऽसि ।
श्रीमत्[21]सुवर्णगिरिदुर्गचरोऽसि कोऽसि
त्वं भीमसाहस [22]सहस्रविलोचनस्य ॥ ४१ ॥
ख्यातं तवेश बहु[23]पुण्यजनाधिपत्यं
कान्ता[24]लकावलिभिराप्ततमैश्च गुप्ता । (?)
त्वामामनन्ति [25]परमेश्वरबद्धसख्यं
त्वं कोऽसि सद्गुणनिधान [26]धनाधिपस्य ॥ ४२ ॥

---

१. मत्स्याकारं चिह्नं महीपतीनां करचरणे भवति यस्य मत्स्यरेखेति प्रसिद्धिः; पक्षे मकरध्वज. २. पुरुषोत्तमो विष्णुः, सत्पुरुषश्च. ३. मन्मथस्य. ४. पार्वती नृपतिकन्याश्च. ५. शत्रुभूतानां त्रिपुरासुराणां वैरिनगराणां च. ६. वृषो महोक्षो धर्मश्च. ७. भस्म संपत्तिश्च. ८. चन्द्रं कनकमपि. ९. 'विभाकर' क. १०. मयूरमग्निं च. ११. आयुधविशेषं सामर्थ्यं च. १२. 'विपन्निहन्त्रीम्' क. १३. तारकं दैत्यविशेषं रिपुबलस्य तारकं शरण्यं च. प्रधानरिपुमिति यावत्. १४. 'नवीननल' क. १५. मयूरध्वजस्य कार्तिकेयस्य. १६. वज्रो हीरकमणिर्दम्भोलिश्च. १७. पक्षाः सहायाः पतत्राणि च. १८. राज्ञां पर्वतानां च. १९. विबुधा देवाः पण्डिताश्च. २०. गुरुरुपदेष्टा वाक्पतिश्च. २१. शोभनवर्णो गिरिदुर्गः; पक्षे सुवर्णगिरिः कनकाचलो मेरुः स एव दुर्गः. 'श्रीकम्बुवर्णगिरिदुर्गचणोऽसि' क. २२. इन्द्रस्य. २३. पुण्ययुक्ता जना राक्षसाश्च. २४. अलका कुबेरपुरी; पक्षे अलकावलिभिश्चूर्णकुन्तलैः. २५. कुबेरपक्षे परमेश्वरः शिवः. २६. कुबेरस्य.

तेजोनिधिस्त्वमसि भूमिभृतः[1] समग्राः
क्रान्ताः करैः[2] प्रसभमुन्नतरैस्तवेश ।
प्राप्तोदयः सततमर्थिजनस्य[3] कोऽसि
त्वं कल्पभूरुह सरोरुहबान्धवस्य[4] ॥ ४३ ॥

आनन्ददोऽसि जनतानयनोत्पलाना-
माप्यायिताखिलजनः करमार्दवेन ।
त्वं शश्वदीश्वरशिरस्तलदत्तपाद-[5][6]
स्तत्कोऽसि[7] मर्त्यभुवनेश निशाकरस्य ॥ ४४ ॥

त्वामंशमीश निगदन्ति मधुद्विषोऽमी
श्यामाभिरामतनुरस्यमलप्रबोधः ।
पुण्यं च भारतमिदं[8] विहितं त्वयैव
त्वं कोऽसि सत्यधन सत्यवतीसुतस्य[9] ॥ ४५ ॥

नीतात्मकीर्तिसुरसिन्धुरियं समुद्र-
प्रान्तं त्वयोन्नतिमसौ गमितः स्ववंशः ।
पूर्वे पवित्रतनवो विहिताश्च कोऽसि
त्वं सत्सु लब्धपरभाग[10] भगीरथस्य ॥ ४६ ॥

एतत्त्वया कृतम[11]ताडकमाशु विश्वं
व्याप्ता मही हरिभिरीश[12] मनोजवैस्ते ।
पुण्यावतारकरणक्षतदुर्दशास्य-[13]
स्त्वं कोऽसि दत्तरिपुलाघव राघवस्य[14] ॥ ४७ ॥

धर्मप्रसूस्त्वमसि[15] सत्यधनस्त्वमेक-
स्त्वं वासुदेवचरणार्चनदत्तचित्तः ।

---

१. पर्वता राजानश्च. २. किरणै राजबलिभिश्च. ३. हे अर्थिजनस्य कल्पभूरुह. ४. सूर्यस्य. ५. शिवो राजानश्च. ६. किरणा अङ्घ्रिश्च. ७. 'त्वं कोऽसि' क. ८. महाभारताभिधो ग्रन्थः, भारतवर्षं च. ९. वेदव्यासस्य. १०. प्राप्तगुणोत्कर्ष. ११. ताडयतीति ताडकः शत्रुः; पक्षे ताडका रामायणप्रसिद्धा काचन राक्षसी. १२. अश्वैर्वानरैश्च. १३. क्षतं दुर्दशाया आस्यं मुखं प्रारम्भो येन; पक्षे क्षतो दुष्टो दशास्यो रावणो येन. १४. रामचन्द्रस्य. १५. युधिष्ठिरो धर्मात्मजः, सत्यसंधश्च प्रसिद्ध एव.

त्वं कोऽसि [1]विप्रजनसेवितशेषवृत्तिः
सङ्ग्रामनिष्ठुर युधिष्ठिरपार्थिवस्य ॥ ४८ ॥
त्वं [2]भूरिकुञ्जरबलो [3]भुवनैकमल्ल-
विद्याविभूषिततनुर्नृप पावनोऽसि ।
[4]प्रच्छन्नसूपकृतिसंभृतबन्धुवाञ्छः
कस्त्वं कवीन्द्रकृतमोद [5]वृकोदरस्य ॥ ४९ ॥
एकस्त्वमीश भुवि [6]धन्वभृतां वरिष्ठः
[7]संस्वामिकारिगणदर्पहरस्त्वमाजौ । (?)
[8]गन्धर्वराजपृतनाविजयाप्तकीर्ति-
स्त्वं कोऽसि सुन्दर [9]पुरंदरनन्दनस्य ॥ ५० ॥
[10]दुर्योधनारिबलदर्पहृतस्त्वमेश
यत्नः [11]पराऽर्जुनयशःप्रसरं निरोद्धुम् ।

---

१. विप्रजनसेविताद्यच्छेषं तेन वृत्तिर्यस्य. २. दशसहस्रनागबलो भीमसेन इति भारते प्रसिद्धम्; राजपक्षे भूरिकुञ्जरयुक्तं बलं सैन्यं यस्य. ३. मल्लविद्याविभूषिततनुर्भीमः; राजपक्षे भुवनैकमल्लेति संबोधनम्. ४. प्रच्छन्ना या सूपकृतिः सूपकर्म तया संभृता बन्धुवाञ्छा येन. भीमः सूपकारो भूत्वा विराटसदने स्थित इति भारते विराटपर्वणि प्रसिद्धम्; अन्यत्र प्रच्छन्ना या शोभना उपकृतिरुपकारस्तया. महान्तस्तु प्रच्छन्नमेवोपकुर्वन्ति न तु स्वोपकारं प्रोद्घोषयन्ति. ५. भीमस्य. ६. 'धर्मभृतां' क. अर्जुनस्य धनुर्धरत्वं प्रसिद्धं न तु धर्मभृत्त्वम्. ७ 'संशप्तकारिगणदर्पहरस्त्वमाजौ' इति पाठो भाति. 'संशप्तकास्तु समरे सङ्ग्रामादनिवर्तिनः' इति कोषप्रामाण्यात्संशप्तकाः सङ्ग्रामादनिवर्तिनो येऽरयस्तेषां गणस्य दर्पहर इति राजपक्षे; अर्जुनपक्षे तु संशप्तका नाम केचन क्षत्रिया आसन्, तैः सहार्जुनस्य युद्धं महाभारते द्रोणपर्वण्यतीव प्रसिद्धमस्तीति ज्ञेयम्. ८. गन्धर्वराजा अश्वश्रेष्ठास्तेषां पृतना अश्वसैन्यम्. मह्कीलहार्नस्तु 'Nothing definite of any historical importance is said of Mahîpâla, unless there is in V. 50 an allusion to some war in which a Prince of the Gandharvas was defeated by him' इति वदति; अर्जुनपक्षे गन्धर्वराजस्य चित्ररथस्य पृतना. इयं कथा भारते वनपर्वणि द्रष्टव्या. ९. अर्जुनस्य. १०. दुर्योधना दुःखेन योद्धुं शक्या येऽरयस्तेषां बलं तद्दर्पहारिणः; अन्यत्र दुर्योधनस्यारयः पाण्डवाः. ११. परेषां शात्रवाणामर्जुनस्य शुभ्रस्य यशसः प्रसरम्; अन्यत्र परः शत्रुर्योऽर्जुनो मध्यमपाण्डवस्तस्य यशःप्रसरम्.

त्वं कोऽसि सूर्य[1]जनितप्रमदार्थिसार्थ-
　दौर्गत्यकर्तन विकर्तन[2]संभवस्य ॥ ९१ ॥
रत्नालयस्त्वमसि धाम गभीरताया-
　स्त्वं पासि पार्थ[3]सम भूमिभृतः प्रविष्टान् ।
अन्तःस्थितस्तव हरिः सततं नरेश
　कस्त्वं वितीर्णरिपुजागर सागरस्य ॥ ९२ ॥
शौर्यैकभूः क्रमसमागतसत्त्ववृत्ति-
　स्त्वं राजकुञ्जर[4]शिरःप्रवितीर्णपादः ।
दृप्तारिभास्करतिरस्कृतिसिंहिकाभूः[5]
　कस्त्वं महीपतिमृगाङ्क मृगाधिपस्य[6] ॥ ९३ ॥
दानं[7] ददासि विकटोन्नतवंशशोभ-
　स्त्वं दन्तपालिकरवालहतारिदर्पः । (?)
क्षोणिभृतो[8] जयसि तुङ्गतया नरेन्द्र
　त्वं कोऽसि वैरिबलवारण वारणस्य[9] ॥ ९४ ॥
सद्म श्रियस्त्वमसि मित्र[10]कृतप्रमोद-
　स्त्वं राजहंस[11]समलंकृतपादमूलः ।
स्वामिन्नधःकृतजडो[12]ऽसि गुणा[13]भिरामः
　कस्त्वं स्मिताढ्यमुखपङ्कज पङ्कजस्य ॥ ९५ ॥
सत्पत्र[14]भूषिततनुः सुविशुद्धकोशः[15]
　स्त्वं चन्द्रकान्तिसमलंकृतकान्तमूर्तिः ।
ख्यातं तवैव कविवल्लभ सौमनस्यं[16]
　त्वं ब्रूहि कः समरभैरव कैरवस्य ॥ ९६ ॥

---

१. कर्णः सूर्यसुतः, राजा च सूर्यपालसुतः. २. कर्णस्य. ३. हे अर्जुनतुल्य. ४. राजकुञ्जराः श्रेष्ठगजाः, नृपश्रेष्ठाश्च. ५. सिंहिकाभूः, सिंहो राहुश्च. ६. केसरिणः. ७. मदजलमपि. ८. पर्वतान्महीपतींश्च. ९. गजस्य. १०. मित्रः सूर्योऽपि. ११. राजहंसाः पक्षिविशेषाः, नृपश्रेष्ठाश्च. १२. जलं सलिलम्, जडश्च मूर्खः. १३. गुणास्तन्तवः, शौर्यौदार्यादयश्च. १४. पत्रं वाहनमपि. १५. कोशः कर्णिकापि. १६. पुष्पत्वम्, पाण्डित्यं च.

त्वं पश्यतां हरसि देव मनांसि शश्व-
न्मङ्गल्यभूस्त्वमसि निर्मलताभिरामः ।
कोऽसि प्रसीद वद सद्गुणरत्नयोनि-
स्त्वं कच्छपारिकुलभूषण भूषणस्य[1] ॥ ९७ ॥
धात्रा परोपकरणाय विसृष्टकाय[2]
सच्छायजन्मसमलंकृततुङ्गगोत्रैः[3] ।
ब्रूहि त्रिसंध्यमवनीश्वरवन्दनीय-
स्त्वं कोऽसि सूर्यनृपनन्दन चन्दनस्य ॥ ९८ ॥
नाधःकृतर्द्विजपतिर्[4]न गदान्वितो[5]ऽसि
न त्वं विशुद्धहृदय प्रथितो[6]ग्रमायः ।
त्वं जातु न क्षतवृषो[7] न जडे[8] कृतास्थ-
स्तेनास्तु नाथ हरिणो[9]पमितिः कथं ते ॥ ९९ ॥
नित्यं संनिहितक्षयः स तमसा प्रायोऽभिभूयेत स
त्वत्त्रासाद्भुवनैकनाथ हरिणस्तस्योदरे प्राविशत् ।
मूर्तिस्तस्य कलङ्किता सजडतां धत्ते स दोषाकर
शश्वत्ते[10] विदितस्तथापि नृपते राजा त्वमित्यद्भुतम्[11] ॥ १०० ॥
एकेनोत्तरगोग्रहे विमुखतां पार्थेन नीताः परे
व्यासेन स्तुतिरर्जुनस्य विहितेत्यज्ञायि पूर्वं किल ।
तत्सम्यक्प्रतिभाति संप्रति पुनः श्रीमन्महीपाल न-
स्त्वामालोक्य सहस्रशो रिपुबलं निघ्नन्तमेकं रणे ॥ १०१ ॥
किं ब्रूमो[12]ऽविकलत्वमीश भवतस्त्वं नीतिपात्रं परं
वृत्तान्तं जगतीपते चतसृणामात्मप्रियाणां शृणु ।

---

१. कटककण्डलादेः. २. निर्मितशरीर. ३. गोत्रः पर्वतोऽपि. ४. गरुडः, ब्राह्मणश्रेष्ठश्च. ५. गदा आयुधविशेषः, गदश्च रोगः. 'मदान्वितो' क. ६. विष्णुमायावीति पुराणप्रसिद्धम्. ७. वृषो धर्मः, कश्चिदसुरश्च. ८. जले, मूर्खे च. ९. विष्णुना. १०. 'शब्दस्ते' क. ११. राजा चन्द्रः क्षयादिदोषयुक्तः, भवांस्तद्रहितोऽपि राजेत्याश्चर्यम्. १२. 'ब्रूमोऽधिकतरत्वमीश' क.

कीर्तिर्भ्राम्यति दिक्षु गीर्गुणवतां कण्ठे लुठत्यादृता
मर्यादारहिता मही द्विजसुहृद्गेहे रता श्रीरपि ॥ ६१ ॥
किं[1] चित्रं भुवनैकमल्ल यदियं मन्दाकिनी पद्मभू-
र्लोकादुद्धरता भगीरथनृपेणानायि निम्नां महीम् ।
आश्चर्यं पुनरेतदीश यदितो निम्नान्महीमण्डला-
दूर्ध्वं कीर्तितरङ्गिणी कमलभूलोकं त्वया प्रापिता ॥ ६२ ॥
चित्रं नात्र सैलक्षणस्त्वमकरोः सर्वात्मना विद्विषो
देव प्रैत्ययलोपमाशु विशिखैः संमूर्छितस्याहवे ।
क्रोधाद्भैरवमूर्तिरुल्लसदसिक्रूरप्रहाराद्भुतै-
रस्य त्वं यदनीनशः प्रकृतिमप्येतन्न नाश्चर्यकृत् ॥ ६४ ॥
अत्यम्बुधि भवद्धैर्यमत्यादित्यं भवन्महः ।
अतिसिंहं भवच्छौर्यमतः केनोपमीयसे ॥ ६५ ॥
केयूरं तव भूपाल भुजदण्डे विराजते ।
किरीटमिव बाह्वन्तर्निवासि विजयश्रियः ॥ ६६ ॥
यैदर्चायां नित्यं त्रिभुवनगुरोस्तोत्रमकृथा-
स्तदेष प्रीतस्त्वां ध्रुवमकृत कल्पस्थितिमिह ।
यदुत्सङ्गे तुङ्गे तैव लुठति चन्द्रांशुविमला
प्रलम्बव्याजेन क्षितितिलक तारावलिरियम् ॥ ६७ ॥
वैतालिकैरित्थमभिष्टुतेन संपूजितामर्त्यगुरुद्विजेन ।
विमुक्तकारागृहसंयतेन वितीर्णभूताभयदक्षिणेन ॥ ६८ ॥
तेनाभिषिक्तमात्रेण प्रतिजज्ञे द्वयं स्वयम् ।
पद्मनाथस्य संसिद्धिः कन्यायाः सद्वरार्पणम् ॥ ६९ ॥

१. 'चित्रं तावदिदं सुरेन्द्रभवनान्मन्दाकिनीपाथसा केनाप्युत्तमतेजसा नृपतिना क्ष्मामण्डलं मण्डितम् । नातश्चित्रतरं निशाकरकलालावण्यदुग्धोदधे भूमेर्यद्भवता विरञ्चिनगरी कीर्तिप्लवैः प्लाव्यते ॥' इति प्राचीनपद्यच्छायामनुहरतीदं पद्यम्. २. संतसप्ततिमिते पद्येऽपि 'सूरिसंलक्षणः' इति प्रयोगोऽस्ति. 'स लक्षशः' क. ३. प्रकृतिप्रत्ययौ व्याकरणप्रसिद्धावपि. ४. 'यदर्चा संतत्य' क. ५. ध्रुवो नक्षत्रविशेषोऽपि. ६. 'धवलरविचन्द्रांशु' क.

तच्च द्वयं कृतमनेन विवेकभाजा
राजात्मजा मदनपालवराय दत्ता ।
श्रीपद्मनाथसुरमन्दिरमेतदुच्चै-
र्नीतं समाप्तिमविनाशि यशःशरीरम् ॥ ७० ॥
समर्पिता ब्रह्मपुरी च तेन शेषान्विधायावनिदेवमुख्यान् ।
प्रवर्तितं सत्रमतन्द्रितेन मृष्टान्नपानैरतिधार्मिकेण ॥ ७१ ॥
श्रीपद्मनाथस्य स लोकनाथश्चक्रिद्वयं (?) भूपतिचक्रवर्ती ।
नैवेद्यपाकाय विपक्कबुद्धिः प्रादात्प्रदीपाय च गोत्रदीपः ॥ ७२ ॥
ब्रह्मोत्तरं मण्डपिकासमुत्थं द्वेधा विधाय स्वयमीश्वरेण ।
श्रीपद्मनाथाय वितीर्णमर्धमर्धं च वैकुण्ठसुरेश्वराय ॥ ७३ ॥
विलासिनीवादकगायनादेर्यथार्हतः पादकुलस्य वृत्तिम् ।
स पद्मनाथस्य पुरः समग्रामकल्पयत्प्रेक्षणकाय भूपः ॥ ७४ ॥
पाषाणपल्लीं प्रविभज्य सम्यग्देवाय सार्धानि पदानि पञ्च ।
संपादयामास तथा द्विजेभ्यः सार्धां चतुर्विंशतिमुत्तमेभ्यः ॥ ७५ ॥
ददौ करस्वं खरवारखेटं महीपतिस्तत्रभवं समस्तम् ।
आकाशपातालसमुद्भवं च देवद्विजेभ्यो लवणाकरं च ॥ ७६ ॥
तस्यादृष्टसहायतामुपगतो योगेश्वराङ्गोद्भवः
ख्यातः सूरिसलक्षणः क्षितिपतेः सर्वत्र विश्वासभूः ।
आधारो विनयस्य शीलभवनं भूमिः श्रुतस्याकरः
स्वाध्यायस्य कृतज्ञतैकवसतिः सौजन्यकोशालयः ॥ ७७ ॥
तत्प्रत्ययेन निदधे निखिलानि धर्म-
कार्याणि धर्मनिरतः स नरेन्द्रचन्द्रः ।
विप्रः स निःस्पृहतया गुणगौरवेण
चित्तं विवेश समवृत्तितया च राज्ञः ॥ ७८ ॥

१. 'तत्र' ग. २. 'मदनहारिवराय' क. ३. 'समर्पिता' क. ४. 'चक्रिर्द्वयं' क. ५. 'द्विधा' क. ६. 'करस्कन्धकवाटपीटं' क.

महीपालेन ये विप्रास्तस्मिन्ग्रामे प्रतिष्ठिताः ।
तेषां नामानि लिख्यन्ते विस्तरः शासनोदितः ॥ ७९ ॥
देवलब्धिः सुधीराद्यस्तथा श्रीधरदीक्षितः ।
सूरिः कीर्तिरथः सार्धपदिनोऽ[1]स्य द्विजास्त्रयः ॥ ८० ॥
गङ्गाधरो गौतमश्[2]श्रामलकोऽथ गदाधरः ।
देवनागो वसिष्ठश्च देवशर्मा यशस्करः ॥ ८१ ॥
कृष्णो वराहस्वामी च [3]गृहवासः प्रभाकरः ।
इच्छाधरो मधुश्चैव तिह्लेकः पुरुषोत्तमः ॥ ८२ ॥
रामेश्वरो द्विजवरस्तथा दामोदरो द्विजः ।
अष्टादशैते विप्राश्च पदिनः [4]शड्डलो द्विजः ॥ ८३ ॥
पादोनपदिको रत्न[5]तिहूणेकौ मुरार्चकौ ।
द्वावर्धपदिनावेष विप्राणां संग्रहः कृतः ॥ ८४ ॥
ददौ देवपदानां च मध्यादर्धपदं नृपः ।
विधाय शाश्वतं लोहभटकायस्थसूरये ॥ ८५ ॥
देवाय दत्तः सौवर्णो राज्ञा रत्नैः समाचितः ।
मुकुटः [6]सुमहानीलो मणिर्यत्र विराजते ॥ ८६ ॥
हरिन्मणिमयं भूपतिलकस्तिलकं ददौ ।
रत्नैर्विचित्रं निष्कं च निष्कलङ्कः स भूपतिः ॥ ८७ ॥
प्रादात्केयूरयुगलं रत्नैर्बहुभिराचितम् ।
कङ्कणानां चतुष्कं च महार्हमणिभूषितम् ॥ ८८ ॥
इति रत्नमयं तावदेकमाभरणं विभोः ।
द्वितीयमनिरुद्धस्य सौवर्णं केवलं यथा ॥ ८९ ॥
कङ्कणानां चतुष्कं च [7]भालपट्टद्वयं तथा ।
कृत्तिदारं(?) स्वर्णमुष्टिं बिभर्त्यन्वहमच्युतः ॥ ९० ॥

१. 'वै' क. २. 'च मलकोऽथ गयाधरः' क. ३. 'गृहदासः' क. ४. 'षड्मो' क. ५. 'तिहुणेकौ' क. ६. 'सुमहान्मध्ये' क. ७. 'ताल' क.

रूप्यम[1]ङ्गालिका(?) दत्ता क[2]च्चोलैः पञ्चभिर्युता।
नैवेद्यधारणार्थं च कांस्यस्थालचतुष्टयम् ॥ ९१ ॥
सुवर्णाण्डत्रयं देवपरिवारविभूषणम्।
धृतं चोपरि हेमाब्जमातपत्रीकृतं विभोः ॥ ९२ ॥
निवेश्य ताम्रप[3]त्रे च तन्मयेनैव ग[4]डुना।
स्नाप्यते प्रतिमा नित्यमनिरुद्धस्य राजती ॥ ९३ ॥
प्रतिमा वामनस्यैका द्वितीया लघुराच्युती।
राजावर्तमयी चान्या द्वे पूर्वे रीतिनिर्मिते ॥ ९४ ॥
ताः प्रयत्नेन तिस्रोऽपि पूज्यन्ते गर्भवेश्मनि।
तत्र ताम्रमयं दत्तं दीपार्थं म[5]ल्लिकाद्वयम् ॥ ९५ ॥
स्नानार्थं ताम्रकुण्डे द्वे दत्ते द्वे ताम्रपात्रिके।
ताम्रार्घपात्रद्वितयं तथा दत्तं महीभुजा ॥ ९६ ॥
सधूपदहनाः सप्त घण्टाश्चारात्रिकान्विताः।
दत्ताः शङ्खाश्च सप्तैव ताम्रपात्रीचतुष्टयम् ॥ ९७ ॥
सक[6]ांस्यभाजनं प्रादान्नृपतिः काहलाद्वयम्।
चामरं दण्डयुग्मं च रीतिस्फटिकसंभवम् ॥ ९८ ॥
बृह[7]च्चरुद्वयं ताम्रमयं ताम्रालुकात्र[8]यम्।
ताम्र[9]भाण्ड्यस्तथा पञ्च दत्ताश्चा[10]टुश्च तन्मयः ॥ ९९ ॥
........................................।
एष देवोपकरणद्रव्याणां संग्रहः कृतः ॥ १०० ॥
शिलाकुट्टस्थपत्यादि[11]र्यन्त्रिशाकटिकादिषु।
वापीकूपतडागादि[12]खननाबन्धनेषु च ॥ १०१ ॥
दशमांशं तथा विंशत्यंशं सर्वत्र मण्डले।
ददौ राजानिरुद्धाय तेन सत्रं प्रवर्तते ॥ १०२ ॥

---

१. 'मङ्गालिहा' क. २. कच्चोलः पात्रविशेषः. कचोला, कटोरा, इति हिन्दी-भाषा. ३. 'पट्टे' क. ४. गडुर्जलपात्रविशेषः. गडुवा, लोटा, इति यस्य प्रसिद्धिः. 'किं त्वं लोचनगडुकैः स्नपयसे वक्षोजलिङ्गद्वयम्' इति प्राचीनकविप्रयोगः. ५. मल्लिका दीपाधारपात्रम् 'मल्लिकाद्वयम्' क. ६. 'कांस्यवाढदां' क. ७. चरुः 'चरुवा' इति प्रसिद्धो बृहद्भाण्डविशेषः. 'भेरिद्वयं' ग. ८. 'द्वयम्' क. ९. 'भाण्डाः' ग. १०. चाटुरिति दर्वीवाचकं देशभाषापदम्. ११. 'खानशर्करिलादिषु' ग. १२. 'चखानाबन्धनेषु' ग.

अयं देवालयः पद्मनृपतेः स्फटिकामलः ।
भूयादुपार्जितः पुण्यैर्विष्णुलोक इवाक्षयः ॥ १०३ ॥
भारद्वाजेन मीमांसान्यायसंस्कृतबुद्धिना ।
कवीन्द्ररामपौत्रेण गोविन्दकविसूनुना ॥ १०४ ॥
कविना मणिकण्ठेन सुभाषितसरस्वता ।
प्रशस्तिर्द्विजमुख्येन रचितेयमनिन्दिता ॥ १०५ ॥
प्रतापलङ्केश्वरवाग्द्वितीयां(?)बिभ्रत्सुहृत्तां मणिकण्ठसूरेः ।
अशेषभाषासुकविर्लिलेख वर्णान्यशोदेव दिगम्बरार्कः ॥ १०६ ॥
एकादशस्वतीतेषु संवत्सरशतेषु च ।
एकोनपञ्चाशति च गतेष्वब्देषु विक्रमात् ॥ १०७ ॥
पञ्चमे चाश्विने मासे कृष्णपक्षे नृपाज्ञया ।
रचिता मणिकण्ठेन प्रशस्तिरियमुज्ज्वला ॥ १०८ ॥
अङ्कतोऽपि ११५० आश्विनबहुलपञ्चम्याम् ।
ॐ ॥ तैस्तैस्तस्य महीपतेः प्रतिरणं प्रौढप्रतापानले
नाश्चर्यं यदनेकशो रिपुचमूचक्रैः पतङ्गायितम् ।
यस्येन्द्रप्रतिमस्य बुद्धिसचिवः सर्वज्ञकल्पोऽभव-
न्नीत्या निर्जितमौर्यवंशतिलकाचार्यः स गौरः सुधीः ॥१०९॥
किं चित्रं यन्महीपालो भुनक्ति स्माखिलां महीम् ।
यस्य गीर्वाणमन्त्रीव मन्त्री गौरोऽभवत्सुधीः ॥ ११० ॥
प्रशस्तिरियमुत्कीर्णा सद्वर्णा पद्मशिल्पिना ।
देवस्वामिसुतेन श्रीपद्मनाथसुरालये ॥ १११ ॥
तथैव सिंहराजेन माहुलेन च शिल्पिना ।
प्राप्नुवन्तु समुत्कीर्णान्यक्षराणि यथार्थताम् ॥ ११२ ॥

---

१. 'उपार्जितैः' ग. २. सूक्तिसमुद्रेण. ३. धीसचिवपदस्य रूपान्तरम्. मन्त्रीत्यर्थः. 'बुद्धिसहितः' क. ४. नीत्या निर्जितो मौर्यवंशतिलकस्य (चन्द्रगुप्तस्य) आचार्यो (चाणक्यः) येन सः. चाणक्यादप्यधिकनीतिवेत्तेति भावः. 'सौर्यवंश' इति भट्टकीलहार्नः पठति स्म, व्याख्याति स्म च तथैव. ६. 'सिंहवाजेन' क. ७. 'मङ्गलेन' ग.

## (२२)

## कान्यकुब्जाधीशविजयचन्द्रमहीपतिसूनुयुवराज-जयच्चन्द्रस्य दानपत्रम्।

ॐ स्वस्ति॥

अकुण्ठोत्कण्ठवैकुण्ठकण्ठपीठलुठत्करः।
संरम्भः सुरतारम्भे स श्रियः श्रेयसेऽस्तु वः॥ १॥

आसीदशीतद्युतिवंशजातक्ष्मापालमालासु दिवं गतासु।
साक्षाद्विवस्वानिव भूरिधाम्ना नाम्ना यशोविग्रह इत्युदारः॥ २॥

तत्सुतोऽभून्महीचन्द्रश्चन्द्रधामनिभं निजम्।
येनापारमकूपारपारे व्यापारितं यशः॥ ३॥

तस्याभूत्तनयो नयैकरसिकः क्रान्तद्विषन्मण्डलो
विध्वस्तोद्धतवीरयोधतिमिरः श्रीचन्द्रदेवो नृपः।
येनोदारतरप्रतापशमिताशेषप्रजोपद्रवं
श्रीमद्गाधिपुराधिराज्यमसमं दोर्विक्रमेणार्जितम्[1]॥ ४॥

तीर्थानि काशिकुशिकोत्तरकोशलेन्द्र-
स्थानीयकानि परिपालयताधिगम्य।
हेमात्मतुल्यमनिशं ददता द्विजेभ्यो
येनाङ्किता वसुमती शतशस्तुलाभिः॥ ५॥

तस्यात्मजो मदनपाल इति क्षितीन्द्र-
चूडामणिर्विजयते निजगोत्रचन्द्रः।
यस्याभिषेककलशोल्लसितैः पयोभिः
प्रक्षालितं कलिरजःपटलं धरित्र्याः॥ ६॥

तस्मादजायत निजायतबाहुवल्लि-
बन्धावरुद्धनवराज्यगजो नरेन्द्रः।

---

१. कनौजनगरसाम्राज्यम्.

सान्द्रामृतद्रवमुचां प्रभवो गवां यो
गोविन्दचन्द्र इति चन्द्र इवाम्बुराशेः ॥ ७ ॥

न कथमप्यलभन्त रणक्षमांस्तिसृषु दिक्षु गजानथ वज्रिणः।
ककुभि बभ्रमुरभ्रमुवल्लभप्रतिभटा इव यस्य घटागजाः ॥ ८ ॥

अजनि विजयचन्द्रो नाम तस्मान्नरेन्द्रः
सुरपतिरिव भूभृत्पक्षविच्छेददक्षः।
भुवनदलनहेलाहर्म्यहम्मीरनारी-
नयनजलदधाराधौतभूलोकतापः ॥ ९ ॥

यस्मिंश्चलत्युदधिनेमिमहीजयाय
माद्यत्करीन्द्रगुरुभारनिपीडितेव।
याति प्रजापतिपदं शरणार्थिनी भू-
स्त्वङ्गत्तुरंगनिवहोत्थरजश्छलेन ॥ १० ॥

सोऽयं समस्तराजचक्रसंसेवितचरणः स च परमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरनिजभुजोपार्जितकन्यकुब्जाधिपत्यश्रीचन्द्रदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरश्रीमदनपालदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराजत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीगोविन्दचन्द्रदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराज्यत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीमद्विजयचन्द्रदेवो विजयी देवहलीपत्तलायां नागलीग्रामनिवासिनो निखिलजनपदानुपगतानपि च राजराज्ञीयुवराजमन्त्रिपुरोहितप्रतीहारसेनापतिभाण्डागारिकाक्षपटलिकभिषङ्नैमित्तिकान्तःपुरिकदूतकरितुरगपत्तनाकरस्थानगोकुलाधिकारिपुरुषानाज्ञापयति बोधयत्यादिशति च यथा विदितमस्तु भवतां यथोपरिलिखितग्रामः सजलस्थलः सलोहलवणाकरः सगर्तोषरः साम्रमधूकवनः समत्स्याकरस्तृणयूतिगोचरसहितः स्वसीमासहितश्चतुराघाटविशुद्धः पञ्चविंशत्यधिकद्वाद-

१. वाणीनामुत्पत्तिस्थानम्. गोविन्दचन्द्रः कविरासीदिति तात्पर्यम्.

शशातसंवत्सरेऽङ्केऽपि १२२९ माघीपौर्णमास्यां वसिष्ठघट्टे यमु[न]ायां स्नात्वा विधिवन्मन्त्रदेवमुनिमनुजभूतपितृगणांस्तर्पयित्वा तिमिरपटलपाटनपटुमहसमुष्णरोचिषमुपस्थायौषधिपतिशकलशेखरं समभ्यर्च्य त्रिभुवनत्रातुर्भगवतो वासुदेवस्य पूजां विधाय मातापित्रोरात्मनश्च पुण्ययशोविवृद्धयेऽस्मत्संमत्या समस्तराज[प्र]क्रियोपेतयौवराज्याभिषिक्तमहाराजपुत्रश्रीजयच्चन्द्रदेवेन गोकर्णकुशलतापूतकरतलोदकपूर्वमा चन्द्रार्कं यावत्काश्यपगोत्राभ्यां काश्यपापवत्सारनैध्रुवत्रिप्रवराभ्यां ठक्कुरतिहुलपौत्राभ्यां[1] ठक्कुरआल्हेपुत्राभ्यां[2] राउतश्रीदादेशर्मभ्यां ब्राह्मणाभ्यां शुद्धप्रसादं प्रदत्तो मत्वा यथादीयमानभागभोगकरप्रवणिकरगोकरजातकरतुरुष्कदण्डक्षमारगदिआणणप्रभृतिसमस्तनियतानियतादायानाज्ञाविधेयीभूय दास्यथ ।

भवन्ति चात्र धर्मानुशासिनः पौराणिकश्लोकाः—

"भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥
शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः ।
भूमिदानस्य चिह्नानि फलमेतत्पुरंदर ॥
षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥
गामेकां स्वर्णमेकं च भूमेरप्येकमङ्गुलम् ॥
हरन्नरकमाप्नोति यावदाहूतसंप्लवम् ॥
वाताभ्रविभ्रममिदं वसुधाधिपत्य-
　मापातमात्रमधुरा विषयोपभोगाः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
　धर्मः सखा परमहो परलोकयाने ॥

---

१. 'ठन्कुर' इति मुद्रितः पाठः. २. 'पौत्राभ्यां' इति मुद्रितः पाठः.

सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ॥'
लिखितं ताम्रकमिदं श्रीजयपालेन ।

(इण्डियन् आण्टिक्केरी १५।७८८.)

---

# (२३)

## कान्यकुब्जेश्वरश्रीजयच्चन्द्रमहीपतेर्दानपत्रम् ।

ॐ स्वस्ति ॥

अकुण्ठोत्कण्ठवैकुण्ठकण्ठपीठलुठत्करः ।
संरम्भः सुरतारम्भे स श्रियः श्रेयसेऽस्तु वः ॥ १ ॥

आसीदशीतद्युतिवंशजातक्ष्मापालमालासु दिवं गतासु ।
साक्षाद्विवस्वानिव भूरिधाम्ना नाम्ना यशोविग्रह इत्युदारः ॥ २ ॥

तत्सुतोऽभून्महीचन्द्रश्चन्द्रधामनिभं निजम् ।
येनापारमकूपारपारे व्यापारितं यशः ॥ ३ ॥

तस्याभूत्तनयो नयैकरसिकः क्रान्तद्विषन्मण्डलो
विध्वस्तोद्धतवीरयोधतिमिरः श्रीचन्द्रदेवो नृपः ।
येनोदारतरप्रभावशमिताशेषप्रजोपद्रवं
श्रीमद्गाधिपुराधिराज्यमसमं दोर्विक्रमेणार्जितम् ॥ ४ ॥

तीर्थानि काशिकुशिकोत्तरकोशलेन्द्र-
स्थानीयकानि परिपालयताधिगम्य ।
हेमात्मतुल्यमनिशं ददता द्विजेभ्यो
येनाङ्किता वसुमती शतशस्तुलाभिः ॥ ५ ॥

तस्यात्मजो मदनपाल इति क्षितीन्द्र-
चूडामणिर्विजयते निजगोत्रचन्द्रः ।
यस्याभिषेककलशोल्लसितैः पयोभिः
प्रक्षालितं कलिरजःपटलं धरित्र्याः ॥ ६ ॥

यस्यासीद्विजयप्रयाणसमये तुङ्गाचलोच्चैश्चल-
न्माद्यत्कुम्भिपदक्रमासमभरभ्रश्यन्महीमण्डले ।
चूडारत्नविभिन्नतालुगलितस्त्यानासृगुद्भासितः
शेषः शेषमथादिव(?) क्षणमसौ क्रोडे निलीनाननः ॥ ७ ॥

तस्मादजायत निजायतबाहुवल्लि-
बन्धावरुद्धनवराज्यगजो नरेन्द्रः ।
सान्द्रामृतद्रवमुचां प्रभवो गवां यो
**गोविन्दचन्द्र** इति चन्द्र इवाम्बुराशेः ॥ ८ ॥

न कथमप्यलभन्त रणक्षमांस्तिसृषु दिक्षु गजानथ वज्रिणः ।
कुकुभि बभ्रमुरभ्रमुवल्लभप्रतिभटा इव यस्य घटागजाः ॥ ९ ॥

अजनि **विजयचन्द्रो** नाम तस्मान्नरेन्द्रः
सुरपतिरिव भूभृत्पक्षविच्छेददक्षः ।
भुवनदलनहेलाहर्म्यहम्मीरनारी-
नयनजलदधाराधौतभूलोकतापः ॥ १० ॥

लोकत्रयाक्रमणकेलिविशृङ्खलानि
प्रख्यातकीर्तिकविवर्णितवैभवानि ।
यस्य त्रिविक्रमपदक्रमभाञ्जि भान्ति
प्रोद्द्योतयन्ति बलिराजभयं यशांसि ॥ ११ ॥

यस्मिंश्चलत्युदधिनेमिमहीजयार्थं
माद्यत्करीन्द्रगुरुभारनिपीडितेव ।
याति प्रजापतिपदं शरणार्थिनी भू-
स्त्वङ्गत्तुरङ्गनिवहोत्थरजश्छलेन ॥ १२ ॥

तस्मादद्भुतविक्रमादथ जयच्चन्द्राभिधानः पति-
र्भूपानामवतीर्ण एष भुवनोद्धाराय नारायणः ।
द्वैधीभावमपास्य विग्रहरुचिं धिक्कृत्य शान्ताशयाः
सेवन्ते यमुदग्रबन्धनभयध्वंसार्थिनः पार्थिवाः ॥ १३ ॥

गच्छेन्मूर्छामतुच्छां न यदि कवलयेत्कूर्मपृष्ठाभिघात-
प्रत्यावृत्तः श्रमार्तो नमदखिलफणश्वासवात्यासहस्रम् ।
उद्योगे यस्य धावद्धरणिधरधुनीनिर्झरस्फारधार-
भ्रश्यद्दानद्विपालीबहलभरगलद्धैर्यमुद्रः फणीन्द्रः ॥ १४ ॥

सोऽयं समस्तराजचक्रसंसेवितचरणः स च परमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरनिजभुजोपार्जितकन्यकुब्जाधिपत्यश्रीचन्द्रदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरश्रीमदनपालदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराजत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीगोविन्दचन्द्रदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराजत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीविजयचन्द्रदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराजत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीमज्जयच्चन्द्रदेवो विजयी असुरेसपत्तलायां केमोलीग्रामनिवासिनो निखिलजनपदानुपगतानपि च राजराज्ञीयुवराजमन्त्रिपुरोहितप्रतीहारसेनापतिभाण्डागारिकाक्षपटलिकभिषड्नैमित्तिकान्तःपुरिकदूतकरितुरगपत्तनाकरस्थानगोकुलाधिकारिपुरुषानाज्ञापयति बोधयत्यादिशति च । विदितमस्तु भवतां यथोपरिलिखितग्रामः सजलस्थलः सलोहलवणाकरः समत्स्याकरः सगर्तोषरः सगिरिगहननिधानः समधूकाम्रवनवाटिकाविटपतृणयूतिगोचरपर्यन्तः सोर्ध्वाधश्चतुराघाटविशुद्धः स्वसीमापर्यन्तस्त्रिचत्वारिंशदधिकद्वादशशतसंवत्सरे आषाढे मासि शुक्लपक्षे सप्तम्यां तिथौ रविदिने अङ्कतोऽपि संवत् १२४३ आषाढसुदि ७ रवौ अद्येह श्रीमद्वाराणस्यां गङ्गायां स्नात्वा विधिवन्मन्त्रदेवमुनिमनुजभूतपितृगणांस्तर्पयित्वा तिमिरपटलपाटनपटुमहसमुष्णरोचिषमुपस्थायौषधिपतिशकलशेखरं समभ्यर्च्य त्रिभुवनत्रातुर्भगवतो वासुदेवस्य पूजां विधाय प्रचुरपायसेन हविषा हविर्भुजं हुत्वा मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धयेऽस्माभिर्गोकर्णकुशलतापूतकरतलोदकपूर्वकं भारद्वाजगोत्राय भारद्वाजाङ्गिरसबा-

हैस्यत्येति त्रिप्रवराय राउतश्रीआढलेपौत्राय राउतश्रीदूंटापुत्राय डोडराउतश्रीअणंगाय चन्द्रार्कं यावच्छासनीकृत्य प्रदत्तो मत्वा यथादीयमानभागभोगकरप्रवणिकरप्रभृतिनियतानियतसमस्तदायानाज्ञाविधेयीभूय दास्यथेति ।

भवन्ति चात्र श्लोकाः—

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥
शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः ।
भूमिदानस्य चिह्नानि फलमेतत्पुरंदर ॥
षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
वहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥
तडागानां सहस्रेण वाजपेयशतेन च ।
गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति ॥
वारिहीनेष्वरण्येषु शुष्ककोटरवासिनः ।
कृष्णसर्पाश्च जायन्ते देवब्रह्मस्वहारिणः ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥
वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरा विषयोपभोगाः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥

(इण्डियन् आण्टिक्केरी १५।११-१२)

# (२४)

## महाराजश्रीमहेन्द्रपालस्य दानपत्रम्।

(पत्रोपरि राजमुद्रा)

परमवैष्णवो महाराजश्रीदेवशक्तिदेवस्तस्य पु-
त्रस्तत्पादानुध्यातः श्रीभूयिकादेव्यामुत्पन्नः प-
रममाहेश्वरो महाराजश्रीवत्सराजदेवस्तस्य पुत्र-
स्तत्पादानुध्यातः श्रीसुन्दरीदेव्यामुत्पन्नः परम-
भगवतीभक्तो महाराजश्रीनागभटदेवस्तस्य पु-
त्रस्तत्पादानुध्यातः श्रीमदीसटादेव्यामुत्पन्नः पर-
मादित्यभक्तो महाराजश्रीरामभद्रदेवस्तस्य पुत्र-
स्तत्पादानुध्यातः श्रीमदप्पादेव्यामुत्पन्नः परम-
भगवतीभक्तो महाराजश्रीभोजदेवस्तस्य पुत्रस्त-
त्पादानुध्यातः श्रीचन्द्रभट्टारिकादेव्यामुत्पन्नः
परमभगवतीभक्तो महाराजश्रीमहेन्द्रपालदेवः॥

(दानपत्रम्)

स्वस्तिश्रीमहोदय[1]समावासितानेकगोहस्त्यश्वरथपत्तिसंपन्नस्कन्धावारात्परमवैष्णवो महाराजश्रीदेवशक्तिदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीभूयिकादेव्यामुत्पन्नः परममाहेश्वरो महाराजश्रीवत्सराजदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीसुन्दरीदेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्रीनागभटदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीमदीसटादेव्यामुत्पन्नः परमादित्यभक्तो महाराजश्रीरामभद्रदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीमदप्पादेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्रीभोजदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीचन्द्रभट्टारिकादेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्रीमहेन्द्रपालदेवः श्रावस्ती[2]भुक्तौ श्रावस्तीमण्डलान्तःपातिवालयिकाविषयसंबद्धपानीयकग्रामसमुप-

१. महोदयमिति कान्यकुब्ज(कनौज)नगरस्य नामान्तरम्. २. श्रावस्तीति 'साहेतमाहेत'नाम्ना प्रसिद्धो ग्रामो 'गोंडा'प्रान्ते वर्तते.

गतान्सर्वानेव यथास्थाननियुक्तान्प्रतिवासिनश्च समाज्ञापयति। उपरिलिखितग्रामः सर्वायसमेत आचन्द्रार्कक्षितिकालं पूर्वदत्तदेवब्रह्मदेयवर्जितो मया पित्रोः पुण्याभिवृद्धये सावर्णसगोत्रकौथुमच्छन्दोगसब्रह्मचारिभट्टपद्मसाराय सवितुः कुम्भसंक्रान्तौ स्नात्वा प्रतिग्रहेण प्रतिपादित इति विदित्वा भवद्भिः समनुमन्तव्यम्। प्रतिवासिभिरप्याज्ञाश्रवणविधेयैर्भूत्वा सर्वाया अस्य समुपनेया इति।

श्रीमद्भाकप्रयुक्तस्य शासनस्य स्थिरायतेः।
संवत्सराणां १०० ५० ५ माघसुदि १० निबद्धम्॥

(इण्डियन् आण्टिक्केरी १५।१०५-१३)

# (२५)

## महाराजश्रीविनायकपालस्य दानपत्रम्।

(पत्रोपरि राजमुद्रा)

परमवैष्णवो महाराजश्रीदेवशक्तिदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीभूयिकादेव्यामुत्पन्नः परममाहेश्वरो महाराजश्रीवत्सराजदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीसुन्दरीदेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्रीनागभटदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीमदीसटादेव्यामुत्पन्नः परमादित्यभक्तो महाराजश्रीरामभद्रदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीमदप्पादेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्रीभोजदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीचन्द्रभट्टारिकादेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्रीमहेन्द्रपालदेवस्तस्य पुत्रस्तत्पादानुध्यातः श्रीदेहनागादेव्यामुत्पन्नः परमवै-

१. अत्र संवत्सराङ्काणां संकलने १५५ इयं संख्या समुत्पद्यते. अयं सुप्रसिद्धस्य कान्यकुब्जमहीपतेर्हर्षवर्धनस्य संवत्सरः. हर्षवर्धनश्च ६०६ ख्रिस्ताब्द आसीदित्येतेषु वर्षेषु पूर्वसंख्यायां योजितेषु ७६१ मितः ख्रिस्ताब्दो दानपत्रलेखनकाल इति फ्लीटपण्डितो वक्ति.

ष्णवो महाराजश्रीभोजदेवस्तस्य भ्राता श्रीमहेन्द्रपालदेवपुत्रस्तयोः पादानुध्यातः श्रीमहीदेवीदेव्यामुत्पन्नः परमादित्यभक्तो महाराजश्रीविनायकपालदेवः ॥

(दानपत्रम्)

ॐ स्वस्ति महोदयसमावासितानेकगोहस्त्यश्वरथपत्तिसंपन्नस्कन्धावारात्परमवैष्णवो महाराजश्री**देवशक्तिदेव**स्तस्य पुत्रस्तत्पादानुध्यातः श्रीभूयिकादेव्यामुत्पन्नः परममाहेश्वरो महाराजश्री**वत्सराजदेव**स्तस्य पुत्रस्तत्पादानुध्यातः श्रीसुन्दरीदेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्री**नागभटदेव**स्तस्य पुत्रस्तत्पादानुध्यातः श्रीमदीसटादेव्यामुत्पन्नः परमादित्यभक्तो महाराजश्री**रामभद्रदेव**स्तस्य पुत्रस्तत्पादानुध्यातः श्रीमदप्पादेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्री**भोजदेव**स्तस्य पुत्रस्तत्पादानुध्यातः श्रीचन्द्रभट्टारिकादेव्यामुत्पन्नः परमभगवतीभक्तो महाराजश्री**महेन्द्रपालदेव**स्तस्य पुत्रस्तत्पादानुध्यातः श्रीदेहनागादेव्यामुत्पन्नः परमवैष्णवो महाराजश्री**भोजदेव**स्तस्य भ्राता श्रीमहेन्द्रपालदेवपुत्रस्तयोः पादानुध्यातः श्रीमहीदेवीदेव्यामुत्पन्नः परमादित्यभक्तो महाराजश्री**विनायकपालदेवः** प्रतिष्ठानभुक्तौ[1] वाराणसीविषयसंबद्धकाशीपारपथकप्रतिबद्धटिक्करिकाग्रामसमुपगतान्सर्वानेव यथास्थाननियुक्तान्प्रतिवासिनश्च समाज्ञापयति । उपरिलिखितग्रामः सर्वायसमेत आ चन्द्रार्कक्षितिकालं पूर्वदत्तदेवब्रह्मदेयवर्जितो मया पित्रोः पुण्याभिवृद्धये दर्भिसगोत्राथर्वसब्रह्मचारिभट्टभुल्लाकाय षष्ठ्यां गङ्गायां स्नात्वा प्रतिग्रहेण प्रतिपादित इति विदित्वा भवद्भिः समनुमन्तव्यः । प्रतिवासिभिरप्याज्ञाश्रवणविधेयैर्भूत्वा सर्वाया अस्य समुपनेया इति ।

श्रीहर्षेण प्रयुक्तस्य शासनस्य स्थिरायतेः ।

संवत्सराणां १०० ८० ८ फाल्गुनबदि ९ निबद्धम् ॥

(इण्डियन् आण्टिक्वेरी १५।१३८–४१)

---

१. एतत्प्रतिष्ठानं नाम नगरं चन्द्रवंश्यमहीपतीनां राजधानी प्रयागसमीपे क्वचिदासीत्. 'एतद्भगवत्या भागीरथ्या यमुनासङ्गपावनेषु सलिलेषु पुण्येष्ववलोकयत इवात्मानं प्रतिष्ठानस्य' इति विक्रमोर्वश्यां द्वितीयेऽङ्के उर्वश्युक्तिः. दक्षिणदेशे पैठणनाम्ना प्रसिद्धं प्रतिष्ठानं त्वन्यत्.

# (२६)

## मन्दसोरनगरस्थसूर्यमन्दिरप्रशस्तिः।

सिद्धम् ॥

यो वृत्त्यर्थमुपास्यते सुरगणैः सिद्धेश्च सिद्ध्यर्थिभि-
ध्यानैकाग्र(ग्र्य)परैर्विधेयविषयैर्मोक्षार्थिभिर्योगिभिः।
भक्त्या तीव्रतपोधनैश्च मुनिभिः शापप्रसादक्षमै-
र्हेतुर्यो जगतः क्षयाभ्युदययोः पायात्स वो भास्करः ॥
तत्त्वं ज्ञानविदोऽपि यस्य न विदुर्ब्रह्मर्षयोऽभ्युद्यताः
कृत्स्नं यश्च गभस्तिभिः प्रविसृतैः पुष्णाति लोकत्रयम्।
गन्धर्वामरसिद्धकिंनरनरैः संस्तूयतेऽभ्युत्थितो
भक्तेभ्यश्च ददाति योऽभिलषितं तस्मै सवित्रे नमः ॥
यः प्रत्यहं प्रतिविभात्युदयाचलेन्द्र-
विस्तीर्णतुङ्गशिखरस्खलितांशुजालः।
क्षीबाङ्गनाजनकपोलतलाभिरामः
पायात्स वः सुकिरणाभरणो विवस्वान् ॥
कुसुमभरानततरुवरदेवकुलसभाविहाररमणीयात्।
लाटविषयान्नगावृतशैलाज्जगति प्रथितशिल्पाः ॥
ते(तद्)देशपार्थिवगुणापहृताः प्रकाश-
मध्वादिजान्यविरलान्यसुखान्यपास्य।
जातादरा दशपुरं[1] प्रथमं मनोभि-
रन्वागताः ससुतबन्धुजनाः समेत्य ॥
मत्तेभगण्डतटविच्युतदानबिन्दु-
सिक्तोपलाचलसहस्रविभूषणायाः।

---

१. 'दशपुरं' इति नाम्नोऽपभ्रंशो 'दसोर' इति तस्य च क्रमेण 'मन्दसोर' इति जात इत्याधुनिकाः।

पुष्पावतंसतरुम(ख)ण्डवतंसकाया
भूमेः परं तिलकभूतमिदं क्रमेण ॥
तटोत्थवृक्षच्युतनैकपुष्पविचित्रतीरान्तजलानि भान्ति।
प्रफुल्लपद्माभरणानि यत्र सरांसि कारण्डवसंकुलानि ॥
विलोलवीचीचलितारविन्दपतद्रजःपिञ्जरितैश्च हंसैः।
स्वकेसरोदारभरावभुग्नैः क्वचित्सरांस्यम्बुरुहैश्च भान्ति ॥
स्वपुष्पभारावनतैर्नगेन्द्रैर्मदप्रगल्भालिकुलस्वनैश्च।
अजस्रगाभिश्च पुराङ्गनाभिर्वनानि यस्मिन्समलंकृतानि ॥
चलत्पताकान्यबलासनाथान्यत्यर्थशुक्लान्यधिकोन्नतानि।
तडिल्लताचित्रसिताभ्रकूटतुल्योपमानानि गृहाणि यत्र ॥
कैलासतुङ्गशिखरप्रतिमानि चान्या-
न्याभान्ति दीर्घवलभीनि सवेदिकानि।
गान्धर्वशब्दमुखराणि निविष्टचित्र-
कर्माणि लोलकदलीवनशोभितानि ॥
प्रासादमालाभिरलंकृतानि धरां विदार्येव समुत्थितानि।
विमानमालासदृशानि यत्र गृहाणि पूर्णेन्दुकरामलानि ॥
यद्भात्यभिरम्यसरिद्वयेन चपलोर्मिणा समुपगूढम्।
रहसि कुचशालिनीभ्यां प्रीतिरतिभ्यां सराङ्गमिव ॥
सत्यक्षमादमशमव्रतशौचधैर्य-
स्वाध्यायवृत्तविनयस्थितिबुद्ध्युपेतैः।
विद्यातपोनिधिभिरस्मयितैश्च विप्रै-
र्यद्भ्राजते ग्रहगणैः खमिव प्रदीप्तैः ॥
अथ समेत्य निरन्तरसंगतैरहरहः प्रविजृम्भितसौहृदाः।
नृपतिभिः सुतवत्प्रतिमानिताः प्रमुदिता न्यवसन्त सुखं पुरे ॥

---

१. 'सिवानी' 'सुमली' इति च नदीद्वयं मन्दसोरनगरसमीपस्थम्. २. ते पूर्वोक्ता लाटविषयादागताः पट्टशिल्पिनः.

श्रवणसुभगं धानुर्वेद्यं दृढं परिनिष्ठिताः
सुचरितशतासङ्गाः केचिद्विचित्रकथाविदः ।
विनयनिभृताः सम्यग्धर्मप्रसङ्गपरायणाः
प्रियमपरुषं पथ्यं चान्ये क्षमा बहु भाषितुम् ॥
केचित्स्वकर्मण्यधिकास्तथान्यैर्विज्ञायते ज्योतिषमात्मवद्भिः ।
अद्यापि चान्ये समरप्रगल्भाः कुर्वन्त्यरीणामहितं प्रसह्य ॥
प्राज्ञा मनोज्ञवधवः(पुषः) प्रथितोरुवंशा
वंशानुरूपचरिताभरणास्तथान्ये ।
सत्यव्रताः प्रणयिनामुपकारदक्षा
विस्रम्भपूर्वमपरे दृढसौहृदाश्च ॥
विजितविषयसङ्गैर्धर्मशीलैस्तथान्यै-
र्मृदुभिरधिकसत्त्वैर्लोकयात्राम(प)रैश्च ।
स्वकुलतिलकभूतैर्मुक्तरागैरुदारै-
रधिकमभिविभाति श्रेणिरेवंप्रकारैः ॥
तारुण्यकान्त्युपचितोऽपि सुवर्णहार-
ताम्बूलपुष्पविधिना समलंकृतोऽपि ।
नारीजनः प्रियमुपैति न तावदग्र्यां (?)
यावन्न पट्टमयवस्त्रयुगानि धत्ते ॥
स्पर्शवता वर्णान्तरविभागचित्रेण नेत्रसुभगेन ।
यैः सकलमिदं क्षितितलमलंकृतं पट्टवस्त्रेण ॥
विद्याधरीरुचिरपल्लवकर्णपूर-
वातेरितास्थिरतरं प्रविचिन्त्य लोकम् ।
मानुष्यमर्थनिचयांश्च तथा विशालां-
स्तेषां शुभा मतिरभूदचला ततस्तु ॥

---

१. सजातीयानां शिल्पिनां समूहः.

चतुःसमुद्रान्तविलोलमेखलां सुमेरुकैलासबृहत्पयोधराम् ।
वनान्तवान्तस्फुटपुष्पहासिनीं कुमारगुप्ते पृथिवीं प्रशासति ॥
समानधीः शुक्रबृहस्पतिभ्यां ललामभूतो भुवि पार्थिवानाम् ।
रणेषु यः पार्थसमानकर्मा बभूव गोप्ता नृपविश्ववर्मा ॥
दीनानुकम्पनपरः कृपणार्तवर्ग-
संधा(?)प्रदोऽधिकदयालुरनाथनाथः ।
कल्पद्रुमः प्रणयिनामभयप्रदश्च
भीतस्य यो जनपदस्य च बन्धुरासीत् ॥
तस्यात्मजः स्थैर्यनयोपपन्नो बन्धुप्रियो बन्धुरिव प्रजानाम् ।
बन्ध्वर्तिहर्ता नृपबन्धुवर्मा द्विड्दृप्तपक्षक्षपणैकदक्षः ॥
कान्तो युवा रणपटुर्विनयान्वितश्च
राजापि सन्नुपसृतो न मदैः स्मयाद्यैः ।
शृङ्गारमूर्तिरभिभात्यनलंकृतोऽपि
रूपेण यः कुसुमचाप इव द्वितीयः ॥
वैधव्यतीव्रव्यसनक्षतानां स्मृत्वा यमद्याप्यरिसुन्दरीणाम् ।
भयाद्भवत्यायतलोचनानां घनस्तनायासकरः प्रकम्पः ॥
तस्मिन्नेव क्षितिपतिवृषे बन्धुवर्मण्युदारे
सम्यक्स्फीतं दशपुरमिदं पालयत्युन्नतांसे ।
शिल्पावाप्तैर्धनसमुदयैः पट्टवायैरुदारं
श्रेणीभूतैर्भवनमतुलं कारितं दीप्तरश्मेः ॥
विस्तीर्णतुङ्गशिखरं शिखरिप्रकाश-
मभ्युद्गतेन्द्वमलरश्मिकलापगौरम् ।
यद्भाति पश्चिमपुरस्य निविष्टकान्त-
चूडामणिप्रतिसमं नयनाभिरामम् ॥
रामासनाथरचने दरभास्करांशु-
वह्निप्रतापसुभगे जललीनमीने ।

---

१. हिन्दुस्तानीभाषायां 'पटुवा' इति प्रसिद्धैः.

चन्द्रांशुहर्म्यतलचन्दनतालवृन्त-
हारोपभोगरहिते हिमदग्धपद्मे ॥
रोध्रप्रियंगुतरुकुन्दलताविकोश-
पुष्पासवप्रमुदितालिक(कु)लाभिरामे ।
काले तुषारकणकर्कशशीतवात-
वेगप्रनृत्तलवलीनगणै(नै)कशाखे ॥
स्मरवशगतरुणजनवल्लभाङ्गनाविपुलकान्तपीनोरु-[1]।
स्तनजघनघनालिङ्गननिर्भर्त्सिततुहिनहिमपाते ॥
मालवानां गणस्थित्या याते शतचतुष्टये ।
त्रिनवत्यधिकेऽब्दानां(४९३)ऋतौ सेव्यघनस्व(स्त)ने ॥
सहस्यमासशुक्लस्य प्रशस्तेऽह्नि त्रयोदशे ।
मङ्गलाचारविधिना प्रासादोऽयं निवेशितः ॥
बहुना समतीतेन कालेनान्यैश्च पार्थिवैः ।
व्यशीर्यतैकदेशोऽस्य भवनस्य ततोऽधुना ॥
स्वयशोवृद्धये सर्वमत्युदारमुदारया ।
संस्कारितमिदं भूयः श्रेण्या भानुमतो गृहम् ॥
अत्युन्नतमवदातं नभः स्पृशन्निव मनोहरैः शिखरैः ।
शशिभान्वोरभ्युदयेष्वमलमयूखायतनभूतम् ॥
वत्सरशतेषु पञ्चसु विंशत्यधिकेषु नवसु चाब्देषु(५२९)[2]।
यातेष्वभिरम्यतपस्यमासशुक्लद्वितीयायाम् ॥
स्पष्टैरशोकतरुकेतकसिन्दुवार-
लोलातिमुक्तकलतामदयन्तिकानाम् ।
पुष्पोद्गमैरभिनवैरधिगम्य नून-
मैक्यं विजृम्भितशरे हरधूतदेहे ॥
मधुपानमुदितमधुकरकुलोपगीतनगणै(नै)कपृथुशाखे ।
काले नवकुसुमोद्गमदन्तुरकान्तप्रचुररोध्रे ॥

---

१. कविसंप्रदायविरुद्धोऽयं पूर्वोत्तरार्धयोः समासः. २. विक्रमसंवत्सरोऽयम्.

शशिनेव नभो विमलं कौस्तुभमणिनेव शार्ङ्गिणो वक्षः ।
भवनवरेण तथेदं पुरमखिलमलंकृतमुदारम् ॥
अमलिनशशिलेखादन्तुरं पिङ्गलानां
परिवहति समूहं यावदीशो जटानाम् ।
विकट(च)कमलमालामंससक्तां च शार्ङ्गी
भवनमिदमुदारं शाश्वतं तावदस्तु ॥
श्रेण्यादेशेन भक्त्या च कारितं भवनं रवेः ।
पूर्वा(?) चेयं प्रयत्नेन रचिता वत्सभट्टिना ॥
स्वस्ति कर्तृलेखकवाचकश्रोतृभ्यः । सिद्धिरस्तु ॥

(इण्डियन् आण्टिक्केरी १५।१९४-२०१)

## (२७)

## मन्दसोरनगरकूपस्थितप्रशस्तिः ।

सिद्धम् ॥

स जयति जगतां पतिः पिनाकी स्मितरवगीतिषु यस्य दन्तकान्तिः ।
द्युतिरिव तडितां निशि स्फुरन्ती तिरयति च स्फुटयत्यदश्च विश्वम् ॥
स्वयंभूर्भूतानां स्थितिलयसमुत्पत्तिविधिषु
प्रयुक्तो येनाज्ञां वहति भुवनानां विधृतये ।
पितृत्वं चानीतो जगति गरिमाणं गमयता
स शंभुर्भूयांसि प्रतिदिशतु भद्राणि भवताम् ॥
फणमणिगुरुभाराक्रान्तिदूरावनम्रं
स्थगयति रुचमिन्दोर्मण्डलं यस्य मूर्ध्नाम् ।
स शिरसि विनिबध्नन्रन्ध्रिणीमस्थिमालां
सृजतु भवसृजो वः क्लेशभङ्गं भुजंगः ॥

---

१. शिवस्य.

षष्ट्या सहस्रैः सगरात्मजानां खातः खतुल्यां रुचमादधानः।
अस्योदपन्ना(पाना)धिपतेश्चिराय यशांसि पायात्पयसां विधाता॥
अथ जयति जनेन्द्रः श्रीयशोधर्मनामा
प्रमदवनमिवान्तः शत्रुसैन्यं विगाह्य।
व्रणकिसलयभङ्गैर्योऽङ्गभूषां विधत्ते
तरुणतरुलतावद्वीरकीर्तीर्विनाम्य॥
आजौ जिती(तां) विजयते जगतीं पुनश्च
श्रीविष्णुवर्धननराधिपतिः स एव।
प्रख्यात औलिकरलाञ्छन आत्मवंशो
येनोदितोदितपदं गमितो गरीयः॥
प्राचो नृपान्सुबृहतश्च बहूनुदीचः
साम्ना युधा च वशगान्प्रविधाय येन।
नामापरं जगति कान्तमदो दुरापं
राजाधिराजपरमेश्वर इत्युदूढम्॥
स्निग्धश्यामाम्बुदाभैः स्थगितदिनकृतो यज्वनामाज्यधूमै-
रम्भो मेध्यं(ध्यं) मघोनावधिषु विदधता गाढसंपन्नसस्याः।
संहर्षाद्वाणिनीनां कररभसहृतोद्यानचूताङ्कुराग्रा
राजन्वन्तो रमन्ते भुजविजितभुवा भूरयो येन देशाः॥
यस्योत्केतुभिरुन्मदद्विपकरव्याविद्धलोध्रद्रुमै-
रुद्धूतेन वनाध्वनि ध्वनिनदद्विन्ध्याद्रिरन्ध्रैर्बलैः॥
वालेयच्छविधूम(स)रेण रजसा मन्दांशु संलक्ष्यते
पर्यावृत्तशिखण्डिचन्द्रक इव ध्यामं रवेर्मण्डलम्॥
तस्य प्रभोर्वंशकृतां नृपाणां पादाश्रयाद्विश्रुतपुण्यकीर्तिः।
भृत्यः स्वनैभृत्यजितारिषट्क आसीद्व(द्ध?)सीयान्किल षष्ठिदत्तः॥

---

१. कूपस्य. २. स्त्रीणाम्. ३. गर्दभकान्तिमलिनेन.

हिमवत इव गाङ्गस्तुङ्गनम्रः प्रवाहः
शशभृत इव रेवावारिराशिः प्रथीयान् ।
परमभिगमनीयः शुद्धिमानन्ववायो
यत उदित गरिम्णस्तायते नैगमानाम् ॥

तस्मानुकूलः कुलजात्कलत्रात्सुतः प्रसूतो यशसां प्रसूतिः ।
हरेरिवांशं वशिनं वराहं **वराहदासं** यमुदाहरन्ति ॥

सुकृतिविषयितुङ्गं रूढमूलं धरायां
स्थितिमपगतभङ्गां स्थेयसीमादधानम् ।
गुरुशिखरमिवाद्रेस्तत्कुलं स्वात्मभूत्या
रविरिव **रविकीर्तिः** सुप्रकाशं व्यधत्त ॥

बिभ्रता शुभ्रमभ्रंशि स्मार्तं वर्त्मोचितं सताम् ।
न विसंवादिता येन कलावपि कुलीनता ॥

धुतधीदीधितिध्वान्तान्हविर्भुज इवाध्वरान् ।
भानुगुप्ता ततः साध्वी तनयांस्त्रीनजीजनत् ॥

**भगवद्दोष** इत्यासीत्प्रथमः कार्यवर्त्मसु ।
आलम्बनं बान्धवानामन्धकानामिवोद्धवः ॥

बहुनयविधिवेधा गह्वरेऽप्यर्थमार्गे
विदुर इव विदूरं प्रेक्षया प्रेक्षमाणः ।
वचनरचनबन्धे संस्कृतप्राकृते यः
कविभिरुदितरागं गीयते गीरभिज्ञः ॥

प्रणिधिदृगनुगन्त्रा यस्य बौद्धेन चाक्ष्णा
न निशि तनु दवीयो नास्त्यदृष्टं धरित्र्याम् ।
पदमुदयि दधानोऽनन्तरं तस्य चाभू-
त्स भयप्रभयदत्तो नाम चिन्वन्प्रजानाम् ॥

विन्ध्यस्यावन्ध्यकर्मा शिखरतटपतत्पाण्डुरेवाम्बुराशे-
र्गोलाङ्गूलैः सहेल प्लुतिनमिततरोः पारियात्रस्य चाद्रेः ।

१. वैश्यानाम्. २. यादवानाम्.

आसिन्धोरन्तरालं निजशुचिसचिवाध्यासितानेकदेशं
राजस्थानीयवृत्त्या सुरगुरुरिव यो वर्णिनां भूतये पात् ॥
विहितसकलवर्णासंकरं शान्तडिम्बं
कृत इव कृतमेतद्येन राज्यं निराधि।
स धुरमयमिदानीं दोषकुम्भस्य सूनु-
र्गुरु वहति तदूढां धर्मतो धर्मदोषः ॥
स्वसुखमनतिवाञ्छन्दुर्गमेऽध्वन्यसङ्गं
धुरमतिगुरुभारां यो दधद्भर्तुरर्थे।
वहति नृपतिवेषं केवलं लक्ष्ममात्रं
वलिनमिव विलम्बं कम्बलं बाहुलेयः ॥
उपहितहितरक्षामण्डनो जातिरत्नै-
र्भुज इव पृथुलांसस्तस्य दक्षः कनीयान्।
महदिदमुदपानं खानयामास बिभ्र-
च्छ्रुतिहृदयनितान्तानन्दिनिर्दोषनामा ॥
सुखाश्रेयच्छायं परिणतिहितस्वादुफलदं
गजेन्द्रेणारुग्णं द्रुममिव कृतान्तेन बलिना।
पितृव्यं प्रोद्दिश्य प्रियमभयदत्तं पृथुधिया
प्रथीयस्तेनेदं कुशलमिह कर्मोपरचितम् ॥
पञ्चसु शतेषु शरदां यातेष्वेकान्ननवतिसहितेषु (५८९)।
मालवगणस्थितिवशात्कालज्ञानाय लिखितेषु ॥
यस्मिन्काले कलमृदुगिरां कोकिलानां प्रलापा
भिन्दन्तीव स्मरशरनिभाः प्रोषितानां मनांसि।
भृङ्गालीनां ध्वनिरनुवनं भार(तार)मन्द्रश्च यस्मि-
न्नाधूतज्यं धनुरिव नदच्छ्रूयते पुष्पकेतोः ॥

१. वलियुक्तम्. २. विशेषेण लम्बमानम्. ३. सास्नाम्. ४. वृषभः. ५. ५३३-३४ मिते ख्रिस्ताब्द इति फ्लीटपण्डितः.

प्रियतमकुपितानां रामयन्बद्धरागं
किसलयमिव मुग्धं मानसं मानिनीनाम्।
उपनयति नभस्वान्मानभङ्गाय यस्मि-
न्कुसुमसमयमासे तत्र निर्मापितोऽयम्॥
यावत्तुङ्गैरुदन्वान्किरणसमुदयं(या)सङ्गकान्तं तरङ्गै-
रालिङ्गन्निन्दुबिम्बं गुरुभिरिव भुजैः संविधत्ते सुहृत्ताम्।
बिभ्रत्सौधान्तलेखावलयपरिगतिं मुण्डमालामिवायं
सत्कूपस्तावदास्तामभृतसमरसस्वच्छविष्यन्दिताम्बुः॥
धीमान्दक्षो दक्षिणः सत्यसंधो ह्रीमाञ्छूरो वृद्धसेवी कृतज्ञः।
बद्धोत्साहः स्वामिकार्येष्वखेदी निर्दोषोऽयं पातु धर्म चिराय॥
उत्कीर्णा **गोविन्देन**॥

(इण्डियन् आण्टिक्वेरी १५।२२९-२२८)

---

# (२८)

## यशोधर्ममहीपतेः प्रशस्तिः।

वेपन्ते यस्य भीमस्तनितभयसमुद्भ्रान्तदैत्या दिगन्ताः
शृङ्गाघातैः सुमेरोर्विघटितदृषदः कंदरा यः करोति।
उक्षाणं तं दधानः क्षितिधरतनयादत्तपञ्चाङ्गुलाङ्कं
द्राघिष्ठः शूलपाणेः क्षपयतु भवतां शत्रुतेजांसि केतुः॥१॥
आविर्भूतावलेपैरविनयपटुभिर्लङ्घिताचारमार्गै-
र्मोहादैदंयुगीनैरपशुभमतिभिः पीड्यमाना नरेन्द्रैः।
यस्य क्ष्मा शार्ङ्गपाणेरिव कठिनधनुर्ज्याकिणाङ्कप्रकोष्ठं
बाहुं लोकोपकारव्रतसफलपरिस्पन्दधीरं प्रपन्ना॥२॥
निन्द्याचारेषु योऽस्मिन्विनयमुषि युगे कल्पनामात्रवृत्त्या
राजस्वन्येषु पांशुष्विव कुसुमबलिर्नावभासे प्रयुक्तः।
स श्रेयोधाम्नि सम्राडिति मनुभरतालर्कमांधातृकल्पे
कल्याणे हेम्नि भास्वान्मणिरिव सुतरां भ्राजते यत्र शब्दः॥३॥

ये भुक्ता गुप्तनाथैर्न सकलवसुधाक्रान्तिदृष्टप्रतापै-
नर्ज्ञा हूणाधिपानां क्षितिपतिमुकुटाध्यासिनी यान्प्रविष्टा ।
देशांस्तान्धन्वशैलद्रुमगहनसरिद्वीरबाहूपगूढा-
वीर्यावस्कन्नराज्ञः स्वगृहपरिसरावज्ञया यो भुनक्ति ॥
आ लौहित्योपकण्ठात्तलवनगहनोपत्यकादा महेन्द्रा-
दा गङ्गाश्लिष्टसानोस्तुहिनशिखरिणः पश्चिमादा पयोधेः ।
सामन्तैर्यस्य बाहुद्रविणहृतमदैः पादयोरानमद्भि-
श्चूडारत्नांशुराजिव्यतिकरशबला भूमिभागाः क्रियन्ते ॥
स्थाणोरन्यत्र येन प्रणतिकृपणतां प्रापितं नोत्तमाङ्गं
यस्याश्लिष्टो भुजाभ्यां वहति हिमगिरिर्दुर्गशब्दाभिमानम् ।
नीचैस्तेनापि यस्य प्रणतिभुजबलावर्जनक्लिष्टमूर्ध्ना
चूडापुष्पोपहारैर्मिहिरकुलनृपेणार्चितं पादयुग्मम् ॥
गा(द्या)मेवोन्मातुमूर्ध्वं विगणयितुमिव ज्योतिषां चक्रवालं
निर्देष्टुं मार्गमुच्चैर्दिव इव सुकृतोपार्जितायाः स्वकीर्तेः ।
तेनाकल्पान्तकालावधिरवनिभुजा श्रीयशोधर्मणायं
स्तम्भः स्तम्भाभिरामस्थिरभुजपरिघेणोच्छ्रितिं नायितोऽत्र ॥
श्लाघ्ये जन्मास्य वंशे चरितमघहरं दृश्यते कान्तमस्मि-
न्धर्मस्यायं निकेतश्चलति नियमितं नामुना लोकवृत्तम् ।
इत्युत्कर्षं गुणानां लिखितुमिव यशोधर्मणश्चन्द्रबिम्बे
रागादुत्क्षिप्त उच्चैर्भुज इव रुचिमान्यः पृथिव्या विभाति ॥
इति तुष्टूषया तस्य नृपतेः पुण्यकर्मणः ।
वासुलेनोपरचिताः श्लोकाः कक्कस्य सूनुना ॥
उत्कीर्णा गोविन्देन ॥

(इण्डियन् आण्टिक्वेरी १५।२५३-२५७)

---

## (२९)

## श्रीनारायणपालदेवस्य दानपत्रम् ।

ॐ स्वस्ति ।

मैत्रीं कारुण्यरत्नप्रमुदितहृदयः प्रेयसीं संदधानः
सम्यक्संबोधिविद्यासरिदमलजलक्षालिताज्ञानपङ्कः ।
जित्वा यः कामकारिप्रभवमभिभवं शाश्वतीं प्राप शान्तिं
स श्रीमाँल्लोकनाथो जयति दशबलोऽन्यश्च **गोपालदेवः** ॥
लक्ष्मी जन्मनिकेतनं समकरो वोढुं क्षमः क्ष्माभरं
पक्षच्छेदभयादुपस्थितवतामेकाश्रयो भूभृताम् ।
मर्यादापरिपालनैकनिरतः शौर्यालयोऽस्मादभू-
द्दुग्धाम्भोधिविलासहासिमहिमा **श्रीधर्मपालो** नृपः ॥
जित्वेन्द्रराजप्रभृतीनरातीनुपार्जिता येन महोदयश्रीः ।
दत्ता पुनः सा बलिनार्थयित्रे चक्रायुधायानतिवामनाय ॥
रामस्येव गृहीतसत्यतपसस्तस्यानुरूपो गुणैः
सौमित्रेरुदपादि तुल्यमहिमा **वाक्पाल**नामानुजः ।
यः श्रीमान्नयविक्रमैकवसतिर्भ्रातुः स्थितः शासने
शून्याः शत्रुपताकिनीभिरकरोदेकातपत्रा दिशः ॥
तस्मादुपेन्द्रचरितैर्जगतीं पुनानः
पुत्रो बभूव विजयी **जयपाल**नामा ।
धर्मद्विषां शमयिता युधि **देवपाले**
यः पूर्वजे भुवनराज्यसुखान्यनैषीत् ॥
यस्मिन्भ्रातुर्निदेशाद्बलवति परितः प्रस्थिते जेतुमाशाः
सीदन्नाम्नैव दूरान्निजपुरमजहादुत्कलानामधीशः ।
आसांचक्रे चिराय प्रणयिपरिवृतो बिभ्रदुच्चेन मूर्ध्ना
राजा प्राग्ज्योतिषाणामुपशमितसमित्संकथां यस्य चाज्ञाम् ॥

श्रीमान्विग्रहपालस्तत्सूनुरजातशत्रुरिव जातः।
शत्रुवनिताप्रसाधनविलोपिविमलासिजलधारः॥
रिपवो येन गुर्वीणां विपदमास्पदीकृताः।
पुरुषायुषदीर्घाणां सुहृदः संपदामपि॥
लज्जेति तस्य जलधेरिव जह्नुकन्या
पत्नी बभूव कृतहैहयवंशभूषा।
यस्याः शुचीनि चरितानि पितुश्च वंशे
पत्युश्च पावनविधिः परमो बभूव॥
दिक्पालैः क्षितिपालनाय दधतं देहे विभक्ताः श्रियः
श्रीनारायणपालदेवमसृजत्तस्यां स पुण्योत्तरम्।
यः क्षोणीपतिभिः शिरोमणिरुचा श्लिष्टाङ्घ्रिपीठोपलं
न्यायोपात्तमलं चकार चरितैः स्वैरेव धर्मासनम्॥
चेतःपुराणलेख्यानि चतुर्वर्गनिधीनि च।
आरिप्सन्ते यतस्त्यानि चरितानि महीभृतः॥
स्वीकृतसुजनमनोभिः सत्यापितसातवाहनः सूक्तैः।
त्यागेन यो व्यधत्त श्रद्धेयामङ्गराजकथाम्॥
भयादरातिभिर्यस्य रणमूर्धनि विस्फुरन्।
असिरिन्दीवरश्यामो ददृशे पीतलोहितः॥
यः प्रज्ञया च धनुषा च जगद्विनीय
नित्यं न्यवीविशदनाकुलमात्मधर्मे।
यस्यार्थिनः सविधमेत्य भृशं कृतार्था
नैवार्थितां प्रति पुनर्विदधुर्मनीषाम्॥
श्रीपतिरकृष्णकर्मा विद्याधरनायको महाभोगी।
अनलसदृशोऽपि धाम्ना यश्चित्रं नलसमश्चरितैः॥
व्याप्ते यस्य त्रिजगति शरच्चन्द्रगौरैर्यशोभि-
र्मन्ये शोभां न खलु बिभरामास रुद्राट्टहासः।

सिद्धस्त्रीणामपि शिरसिजेष्वर्पिताः केतकीनां
पत्रापीडाः सुचिरमभवन्भृङ्गशब्दानुमेयाः ॥
तपो ममास्तु राज्यं ते द्वाभ्यामुक्तमिदं द्वयोः।
यस्मिन्विग्रहपालेन सगरेण भगीरथे ॥

स खलु भागीरथीपथप्रवर्तमाननानाविधनौवाटसंपादितसेतुबन्धनिहितशैलशिखरश्रेणीविभ्रमात् निरतिशयघनघनाघनघटाश्यामायमानवासरलक्ष्मीसमारब्धसंततजलदसमयसंदेहात् उदीचीनानेकनरपतिप्राभृतीकृताप्रमेयहयवाहिनीखरखुरोत्खातधूलीधूसरितदिगन्तरालात् परमेश्वरसेवासमायाताशेषजम्बुद्वीपभूपालानन्तपादातभरनमदवनेः श्रीमुद्गगिरिसमावासितश्रीमज्जयस्कन्धावारात् परमसौगतो महाराजाधिराजश्रीविग्रहपालदेवपादानुध्यातः परमेश्वरः परमभट्टारको महाराजाधिराजः श्रीमन्नारायणपालदेवः कुशली तीरभुक्तौ कक्षवैषयिकस्वसंबद्धाविच्छिन्नतलोपेतमकुतिकाग्रामे समुपगताशेषराजपुरुषान् राजराज(जा)नकराजपुत्रराजामात्यमहासांधिविग्रहिकमहाक्षपटलिकमहासामन्तमहासेनापतिमहाप्रतीहारमहाकार्ताकृतिकमहादौःसाधसाधनिकमहादण्डनायकमहाकुमारामात्यराजस्थानीयोपरिकदाशापराधिकचौरोद्धरणिकदाण्डिकदाण्डपाशिकशौल्किकगौल्मिकक्षेत्रपप्रान्तपालकोट्टपालखण्डरक्षतदायुक्तकविनियुक्तकहस्त्यश्वोष्ट्रनौबलव्यापृतककिशोरवडवागोमहिष्यजाविकाध्यक्षदूतप्रेषणिकगमागमिकाभित्वरमाणविषयपतिग्रामपतितरिकगौडमालवखशहूणकुलिककर्णाटलाटचाटभटसेवकादीन् अन्यांश्चाकीर्तितान् राजपादोपजीविनः प्रतिवासिनो ब्राह्मणोत्तरान् महत्तमोत्तमपुरोगमेदान्धचण्डालपर्यन्तान् यथार्हं मानयति बोधयति समादिशति च ! मतमस्तु भवताम्। कलशपोते महाराजाधिराजश्रीनारायणपालदेवेन स्वयंकारितसहस्रायतनस्य तत्र प्रतिष्ठापितस्य भगवतः शिवभट्टारकस्य पाशुपताचार्यपरिषदश्च यथार्हं पूजाबलिचरुसत्रनवकर्माद्यर्थं शयनासनग्लानप्रत्ययभैषज्यपरिष्काराद्यर्थमन्येषामपि स्वाभिमतानां स्वपरिकल्पितविभागेनानवद्यभोगार्थं च यथोपरिलिखितमकु-

१. 'मुङ्गेर' नाम्ना प्रसिद्धे नगरे. २. 'तिरहुत' इति प्रसिद्धायां मिथिलायाम्.

तिकाग्रामः स्वसीमातृणयूतिगोचरपर्यन्तः सतलः सोद्देशः साम्रमधूकः सजलस्थलः सगर्तोषरः सोपरिकरः सदशापचारः सचौरोद्धरणः परिहृतसर्वपीडः अचाटभटप्रवेशः अकिंचित्प्रग्राह्यः समस्तभागभोगकरहिरण्यादिप्रत्यायसमेतः भूमिच्छिद्रन्यायेनाचन्द्रार्कक्षितिसमकालं यावत् मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये भगवन्तं शिवभट्टारकमुद्दिश्य शासनीकृत्य प्रदत्तः। ततो भवद्भिः सर्वैरेवानुमन्तव्यम् । भाविभिरपि भूपतिभिर्भूमेर्दानफलगौरवादपहरणे च महानरकपातभयाद्दानमिदमनुमोद्य पालनीयम् । प्रतिवासिभिः क्षेत्रकरैश्चाज्ञाश्रवणविधेयीभूय यथाकालं समुचितभागभोगकरहिरण्यादि सर्वप्रत्यायोपनयः कार्य इति । संवत् १७[1] वैशाखदिने ९ ॥

तथा च धर्मानुशंसिनः श्लोकाः—

बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
षष्टिं वर्षसहस्राणि स्वर्गे मोदति भूमिदः ।
आक्षेप्ता चानुमन्ता च तान्येव नरके वसेत् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते ॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयोभूयः प्रार्थयत्येष रामः ।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयः क्रमेण ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा न हि पुरुषैः परकीर्तयो विलोप्याः ॥
वेदान्तैरप्यसुगमतमं वेदिता ब्रह्मतार्थं(तत्त्वं)
यः सर्वासु श्रुतिषु परमः सार्धमङ्गैरधीती ।
यो यज्ञानां समुदितमहादक्षिणानां प्रणेता
भट्टः श्रीमानिह स गुरवो दूतकः पुण्यकीर्तिः ॥

१. नारायणपालदेवस्य राज्यारम्भसंवत्सरोऽयम्.

श्रीमता म(स)ङ्कदासेन शुभदासस्य सूनुना।
इदं शासनमुत्कीर्णं सत्सामतटजन्मना॥

(राजमुद्रा)
श्रीनारायणपालदेवस्य

(इण्डियन् आण्टिक्केरी १५। ३०४–३१०)

---

## (३०)

## वलभीप्रभोः श्रीधरसेनमहीपतेर्दानपत्रम्।

ॐ स्वस्ति विजयस्कन्धावाराद्भरुकच्छवासकात्प्रसभप्रणतामित्राणां मैत्रकाणामतुलबलसंपन्नमण्डलाभोगसंसक्तप्रहारशतलब्धप्रतापात्प्रतापोपनतदानमानार्जवोपार्जितानुरागादनुरक्तमौलभृतश्रेणीबलावाप्तराज्यश्रियः परममाहेश्वरश्रीभट्टार्कादव्यवच्छिन्नराजवंशान्मातापितृचरणारविन्दप्रणतिप्रविधौताशेषकल्मषः शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषः तत्प्रभावप्रणताराातिचूडारत्नप्रभासंसक्तपादनखरश्मिसंहतिः सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनान्वर्थराजशब्दो रूपकान्तिस्थैर्यगाम्भीर्यबुद्धिसंपद्भिः स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयानः शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफलप्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदयः पादचारीव सकलभुवनमण्डलाभोगप्रमोदः परममाहेश्वरश्रीगुहसेनस्तस्य सुतस्तत्पादनखमयूखसंतानविसृतजाह्नवीजलौघप्रक्षालिताशेषकल्मषः प्रणयिशतसहस्रोपजीव्यमानसंपद्रूपलोभादिवाश्रितः सरभसमाभिगामिकैर्गुणैः सहजशक्तिशिक्षाविशेषविस्मापिताखिलधनुर्धरः प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मदायानामपाकर्ता प्रजोपघातकारिणामुपप्लवानां दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य संहताराातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसंप्राप्तविमलपार्थिवश्रीः परममाहेश्वरः श्रीधरसेनस्तस्य सुतस्तत्पादानुध्यातः सकलजगदानन्दनात्यद्भुतगुणसमुदयस्थगितसमग्रदिङ्मण्डलः समरशतविजयशोभासनाथमण्डलाग्रद्युतिभासुरतरां-

सपीठोदूढगुरुमनोरथमहाभारः सर्वविद्यापरावरविभागाधिगमविमलमतिरपि सर्वतः सुभाषितलवेनापि सुखोपपादनीयपरितोषः समग्रलोकागाधगाम्भीर्यहृदयोऽपि सुचरितातिशयसुव्यक्तपरमकल्याणस्वभावः खिलीभूतकृतयुगनृपतिपथविशोधनाधिगतोदग्रकीर्तिर्धर्मानुपरोधोज्ज्वलतरीकृतार्थसुखसंपदुपसेवानिरूढधर्मादित्यद्वितीयनामा परममाहेश्वरः **श्रीशीलादित्यः** तस्यानुजस्तत्पादानुध्यातः स्वयमुपेन्द्रगुरुणेव गुरुणात्यादरवता समभिलषणीयामपि राजलक्ष्मीं स्कन्धसक्तां परमभद्र इव धुर्यस्तदाज्ञासंपादनैकरसतयैवोद्वहन्खेदसुखरतिभ्यामनायासितसत्त्वसंपत्तिः प्रभावसंपद्वशीकृतनृपतिशतशिरोरत्नच्छायोपगूढपादपीठोऽपि परावज्ञाभिमानरसानालिङ्गितमनोवृत्तिः प्रणतिमेकां परित्यज्य प्रख्यातपौरुषाभिमानैरप्यरातिभिरनासादितप्रतिक्रियोपायः कृतनिखिलभुवनामोदविमलगुणसंहतिप्रसभविघटितसकलकलिविलसितगतिर्नीचजनाधिरोहिभिरशेषैर्दोषैरनामृष्टात्युन्नतहृदयः प्रख्यातपौरुषास्त्रकौशलातिशयगणतिथविपक्षक्षितिपतिलक्ष्मीस्वयंग्रहप्रकाशितप्रवीरपुरुषप्रथमसंख्याधिगमः परममाहेश्वर**श्रीखरग्रहस्तस्य** तनयस्तत्पादानुध्यातः सकलविद्याधिगमविहितनिखिलविद्वज्जनमनःपरितोषातिशयः सत्त्वसंपदा त्यागौदार्येण च विगतानुसंधानाशमाहिता(?)रातिपक्षमनोरथाक्षभङ्गः सम्यगुपलक्षितानेकशास्त्रकलालोकचरितगह्वरविभागोऽपि परमभद्रप्रकृतिरकृत्रिमप्रश्रयविनयशोभाविभूषणः समरशतजयपताकाहरणप्रत्यग्रोदग्रबाहुदण्डविध्वंसितनिखिलप्रतिपक्षदर्पोदयः स्वधनुः प्रभावपरिभूतास्त्रकौशलाभिमानसकलनृपतिमण्डलाभिनन्दितशासनः परममाहेश्वरः **श्रीधरसेनस्तस्यानुजस्तत्पादानुध्यातः** सच्चरितातिशयितसकलपूर्वनरपतिरतिदुःसाधानामपि प्रसाधयिता विषयाणां मूर्तिमानिव पुरुषकारः परिवृद्धगुणानुरागनिर्भरचित्तवृत्तिभिर्मनुरिव स्वयमभ्युपपन्नः प्रकृतिभिरधिगतकलाकलापः कान्तिमान्निर्वृतिहेतुरकलङ्ककुमुदनाथः प्राज्यप्रतापस्थगितदिगन्तरालप्रध्वंसितध्वान्तराशिः संततोदितः सविता प्रकृतिभ्यः परं प्रत्ययमर्थवन्तमतिबहुतिथप्रयोजनानुबद्धमागमपरिपूर्णं विदधानः संधिविग्रहसमासनिश्चयनिपुणः स्थानेऽनुरूपमादेशं ददद्गुणवृद्धिविधानज-

नितसंस्कारः साधूनां राज्यशालातुरीयतन्त्रयोरुभयोरपि निष्णातः प्रकटविक्रमोऽपि करुणामृदुहृदयः श्रुतवानप्यगर्वितः कान्तोऽपि प्रशमी स्थिरसौहृदोऽपि निरसिता दोषवतामुदयसमयसमुपजनितजनतानुरागपरिपिहितभुवनसमर्थितप्रथितबालादित्यद्वितीयनामा परममाहेश्वरः श्रीध्रुवसेनस्तस्य सुतस्तत्पादकमलप्रणामधरणिकषणजनितकिणलाञ्छनललाटचन्द्रशकलः शिशुभाव एव श्रवणनिहितमौक्तिकालंकारविभ्रमामलश्रुतिविशेषः प्रदानसलिलक्षालिताग्रहस्तारविन्दः कन्याया इव मृदुकरग्रहणादमन्दीकृतानन्दविधिर्वसुंधरायाः कार्मुके धनुर्वेद इव संभाविताशेषलक्ष्यकलापः प्रणतसामन्तमण्डलोत्तमाङ्गधृतचूडारत्नायमानशासनः परममाहेश्वरः परमभट्टारकमहाराजाधिराजपरमेश्वरचक्रवर्ति**श्रीधरसेनः** कुशली सर्वानेव समाज्ञापयति—अस्तु वः संविदितं यथा मया मातापित्रोः पुण्याप्यायनाय उदुम्बरगह्वरविनिर्गतखेटकवास्तव्योदुम्बरगह्वरचातुर्विद्यसामान्यपराशरसगोत्रवाजसनेयिसब्रह्मचारिब्राह्मणभवीनागशर्मपुत्रब्राह्मणादितिशर्मणे खेटकाहारे कोलम्बे वङ्कुसोमालिकाग्रामपूर्वसीम्नि खेटकमानेन व्रीहिद्विपिटकद्वयवापं सभृष्टीकं क्षेत्रं यस्याघाटनानि पूर्वतः सीहमुहिज्जग्रामसीमा दक्षिणतो विश्वपल्लिग्रामसीमा अपरतो द्रोणकसत्कशमीकेदारक्षेत्रं उत्तरतो महेश्वरसत्कखग्गडिकेदारीक्षेत्रं तथा नगरकपथकान्तर्गतदुहुदुहुग्रामे दक्षिणापरसीम्नि खेटकमानेन व्रीहिद्विपीठकवापं कोटीलकक्षेत्रं यस्याघाटनानि पूर्वतः आटिरमणकेदारसंज्ञितं महत्तरगोल्लसत्कक्षेत्रं सब्भीलकसत्कखण्डकेदारश्च दक्षिणतः जाइण्णपल्लिग्रामसीमा अपरतो गुंडुपल्लिग्रामसीमा उत्तरत आरलिकेदारः शमीकेदारो वल्मीकद्वयं च तथा पूर्वसीम्नि दुहुदुहिकापद्राके भृष्टी यस्या आघाटनानि पूर्वतः कपित्थोन्दनदक्षिणतो विशीर्णोज्झित केदारिकं अपरतः कपित्थोन्दनी उत्तरतः ब्राह्मणवैरभटसत्कब्रह्मदेयक्षेत्रमतिक्रम्य उन्दनीद्वयं एवं क्षेत्रद्वयं सभृष्टीकं सोद्रङ्गं सोपरिकरं सभूतवातप्रत्यायं सधान्यहिरण्यादेयं सदशापराधं सोत्पद्यमानवि-

---

१. शालातुरीयः पाणिनिः.

ट्टिकं सर्वप्रक्षेपणीयं पूर्वप्रत्तदेवब्रह्मदेयब्राह्मणविंशतिरहितं भूमिच्छिद्रन्याये-नाचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनं पुत्रपौत्रान्वयभोग्यं उदकातिसर्गेण धर्मदायो निसृष्टः यतोऽस्योचितया ब्रह्मदेयस्थित्या भुञ्जतः कृषतः कर्षयतः प्रदिशतो वा न कैश्चिद्व्यासेधे वर्तितव्यमागामिभद्रनृपतिभिरस्मद्वंशजैरन्यैर्वा । अनित्यान्यैश्वर्याण्यस्थिरं मानुष्यं सामान्यं च भूमिदानफलमवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्यः परिपालयितव्यश्चेति ।

उक्तं च—

'बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥'

दूतकोऽत्र राजदुहितृभूवा ॥ लिखितमिदं संधिविग्रहाधिकृतदिविरपतिवत्रभट्टिपुत्रदिविरपतिश्रीस्कन्दभटेनेति । सं ३०० ३० द्विमार्गशिरशु २ स्वहस्तो मम=

(इण्डियन् आण्टिक्वेरी १५।३३५-४०)

---

## ( ३१ )

## बौद्धगयामन्दिरस्थशिलालेखोऽयम् ।

ॐम् ॥

व्याप्तो येनाप्रमेयः सकलशशिरुचा सर्वतः सत्त्वधातुः
क्षुण्णाः पाषण्डयोधाः सुगतिपथरुधस्तर्कशास्त्राभियुक्ताः ।
संपूर्णो धर्मकोषः प्रकृतिरिपुहृतः साधितो लोकभूत्यै
शास्तुः शाक्यैकबन्धोर्जयति चिरतरं तद्यशःसारतन्त्रम् ॥

---

१. वलभीसंवत्सरोऽयम् ३३०. अत्र ३१९ मितवर्षेषु योजितेषु ६४८-६४९ मितः खिस्ताब्दः.

नैरोधीं शुभभावनामनुसृतैः संसारसंक्लेशजि-
न्मैत्रेयस्य करे विमुक्तिवशिता यस्याद्भुता व्याकृता ।
निर्वाणावसरे च येन चरणौ दृष्टौ मुनेः पावनौ
पायाद्वः स मुनीन्द्रशासनधरः स्तुत्यै महाकाश्यपः ॥
संयुक्तागमिनो विशुद्धरजसः सत्त्वानुकम्पोद्यताः
शिष्या यस्य सकृद्विचेरुरतुलां लङ्काचलोपत्यकाम् ।
तेभ्यः शीलगुणान्विताश्च शतशः शिष्यप्रशिष्याः क्रमा-
ज्जातास्तुङ्गनरेन्द्रवंशतिलकाः प्रोत्सृज्य राज्यश्रियम् ॥
ध्यानोदयाहितहितः शुभाशुभविवेकबुद्धिहतमोहः ।
सद्धर्मातुलविभवो भवो बभूव श्रमणस्ततः ॥
राहुलाख्यश्च तच्छिष्य उपसेनो यतिर्यतः ।
महानामा क्रमादेवमुपसेनस्ततोऽपरः ॥
वात्सल्यं शरणागतस्य सततं दीनस्य वैशेषिकं
व्यापत्सायकसंततिक्षतधृतेरार्तस्य चापत्यकम् ।
क्रूरस्याहितकारिणः प्रविततं बन्धोर्यथाभावतः
एवं सच्चरितोद्भवेन यशसा यस्याचितं भूतलम् ॥
आम्रद्वीपाधिवासी पृथुकुलजलधिस्तस्य शिष्यो महीयां-
ल्लङ्काद्वीपप्रसूतः परहितनिरतः सन्महानामनामा ।
तेनोच्चैर्बोधिमण्डे शशिकरधवलः सर्वतो मण्डपेन
कान्तः प्रासाद एष स्मरबलजयिनः कारितो लोकशास्तुः ॥
व्यपगतविषयस्नेहो हततिमिरदशः प्रदीपवदसङ्गः ।
कुशलेनानेन जनो बोधिसुखमनुत्तरं भजताम् ॥
यावद्ध्वान्तापहारी प्रविततकिरणः सर्वतो भाति भास्वा-
न्यावत्पूर्णोऽम्बुराशिः फणिफणकुटिलैरूर्मिचक्रैः समन्तात् ।

याावच्चेन्द्राधिवासो विविधमणिशिलाचारुशृङ्गः सुमेरुः
शोभाढ्यं तावदेतद्भवनमुरु मुनेः शाश्वतत्वं प्रयातु ॥
संवत् २०० ६० २ चैत्रसुदि ८ ॥

(इण्डियन् आण्टिक्वेरी १५।३५६-३५८)

---

## (३२)

## कोटाप्रान्तस्थविहारप्रशस्तिः।

ॐ नमो रत्नत्रयाय।

जयन्ति वादाः सुगतस्य निर्मलाः समस्तसंदेहनिरासभासुराः।
कुतर्कसंपातनिपातहेतवो युगान्तवाता इव विश्वसंततेः ॥
योऽरूपवानपि बिभर्ति सदैव रूप-
मेकोऽप्यनेक इव भाति च यो निकामम्।
आरादगात्परधियः प्रतिमर्त्यवेद्यो
यो निर्जितारिरजितश्च जिनः स वोऽव्यात् ॥
भिनत्ति यो नृणां मोहं तमो वेश्मनि दीपवत्।
सोऽव्याद्वः सौगतो धर्मो भुक्तमुक्तिफलप्रदः ॥
आर्यसंघस्य विमलाः शरच्छशिजितश्रियः।
जयन्ति जयिनः पादाः सुरासुरशिरोर्चिताः ॥
आसीदम्भोधिधीरः शशिधवलयशा विन्दुनागाभिधान-
स्तत्सूनुः पद्मनागोऽभवदसमगुणैर्भूपिताशेषवंशः।
तस्याप्यानन्दकारी करनिकर इवानुष्णरश्मेस्तनूजो
जातः सामन्तचक्रप्रकटतरगुणः सर्वणागो जितारिः ॥
तस्याभूद्दयिता विशुद्धयशसः श्रीरित्युरःशायिनी
कृष्णस्येव महोदया च शशिनो ज्योत्स्नेव विश्वंभरा।
गौरीवाद्रिदृशोऽसमा शमवतः प्रज्ञेव वा तायिनो
गम्भीरा यदि वा महोर्मिवलया वेलेव वेलाभृतः ॥

ताभ्यामभूद्गुणाम्भोधिर्वशीकृतमनोमलः।
देवदत्त इति ख्यातः सामन्तः कृतिनां कृती॥

येषां नतिर्जिनगुरौ गुरुता गुणेषु
सङ्गोऽर्थिभिः सततदाननिबद्धगर्वैः।
भीतिः प्रकाममघतो जगदेकशत्रो-
स्तेषामयं कृतविशेषगुणोऽन्ववाये॥

येषां भूतिरियं परेति न परैरालोक्यतेऽर्थार्थिभि-
र्येषां मुद्भिभवः परः परमुदः स्वप्नेऽपि नाभूत्तनौ।
येषामात्महितोदयाय दयितं नासीद्गुणासादनं
तेषामेव वशी शशाङ्कधवलो जातः कुलाम्भोनिधौ॥

संपादितजनानन्दः समासादितसंततिः।
कल्पशाखीव जगतामेष जातो गुणाकरः॥

विश्वाश्वासविधौ तृणीकृतसितज्योत्स्नोदये देहिना-
मन्तःशुद्धिविचारणे सुरगुरोरप्याहितात्पोदयः।
गाम्भीर्याकलने निकामकलितक्षीरोदसारस्त्वयं
यत्तन्नूनमहो गुणा गुणितनुव्यासङ्गिनः संगताः॥

तावन्मानधना यशस्ततिभृतस्तावच्च तावद्बुधा-
स्तावत्तायिसुतानुकारकरणास्तावत्कृपाम्भोधयः।
तावन्यस्तपरोपकारतनवस्तावत्कृतज्ञाः परे
यावन्नास्य गुणेक्षणे क्षणमपि प्राप्तावधानो जनः॥

यस्योद्वीक्ष्य गुणानशेषगुणिनामद्याप्यवज्ञात्मनि
निर्वाणाखिलमानसंततिपतच्चेतोविकासासमा।
भानौ ध्वस्तसमस्तनैशतमसि स्वैरं करालीकृति
प्रातर्येन कलाबलोऽपि विगलच्छायः शशाङ्को न किम्॥

यस्यान्वयेऽप्यगुणजन्म न दृष्टपूर्व-
मासादिता न च गुणैर्गणनव्यवस्था।

याता मुहूर्तमपि नो कलिदोषलेशाः
सोऽयं निरस्तसमतो भुवि कोऽप्यपूर्वः ॥
यस्य दानमतिरक्षतदाना भाषितान्यफलवन्ति न सन्ति ।
प्राणदानविहितावधि सख्यं तस्य को गुणनिधेरिह तुल्यः ॥
नाना सन्ति दिनानि सन्ति विविधाश्चन्द्रांशुशीता निशाः
सन्त्यन्याः शतशोऽबला जितजगन्नारीसमस्तश्रियः ।
तन्नानन्दि जगत्त्रयेऽपि सुदिनं सा वा निशा साबला
यज्जन्मान्यगमन्निमित्तपदवीमस्यापरैर्दुर्गमाम् ॥
कोषवर्धनगिरेरनुपूर्वं सोऽयमुन्मिषितधीः सुगतस्य ।
व्यस्तमारनिकरैकगरिम्णो मन्दिरं स विदधाति यथार्थम् ॥
सुखान्यस्वन्तानि प्रकृतिचपलं जीवितमिदं
प्रियाः प्राणप्रख्यास्तडिदुदयकल्पाश्च विभवाः ।
प्रियोदर्काश्चालं क्षणसुखकृतो दुःखबहुला
विहारस्तेनायं भवविभवभीतेन रचितः ॥
सान्द्रध्वानशरद्वलाक(?)निवहत्यक्तार्कबिम्बोज्ज्वलं
संसाराङ्कुरसङ्गभङ्गचतुरं यत्पुण्यमात्तं मया ।
जैनावासविधेरतोऽयमखिलो लोकत्रयानन्दिनीं
तेनारं सुगतश्रियं जितजगद्दोषां जनः प्राप्नुयात् ॥
प्रशस्तिमेनामकरोज्जातः शाक्यकुलोदधौ ।
जज्जकः कियदर्थीशनिवेशविहितस्थितिम् ॥
संवत्सराङ्क ७ माघशुदि ६। उत्कीर्णा चणकेन ॥

(इण्डियन् आण्टिक्वेरी १४।४५–४८)

---

## ( ३३ )

### भरतपुरदेशान्तर्वर्तिब्यानानगरस्थप्रशस्तिः ।

ॐ ॐ नमः सिद्धेभ्यः ॥
आसीन्निर्वृतकान्वयैकतिलकः श्रीविष्णुसूर्यासने
श्रीमत्काम्यकगच्छतारकपथश्वेतांशुमान्विश्रुतः ।

श्रीमान्सूरिमहेश्वरः प्रशमभूः श्वेताम्बरग्रामणी
राज्ये श्रीविजयाधिराजनृपतेः श्रीश्रीपथायां पुरि ॥

ततश्च

नाशं यातु शतं सहस्रसहितं संवत्सराणां द्रुतं
म्यामा(मा मा) भाद्रपदः स भद्रपदवीं मासः समारोहतु ।
सास्यैव क्षयमेतु सोमसहिता कृष्णा द्वितीया तिथिः
पञ्चश्रीपरमेष्ठिनिष्ठहृदयः प्राप्तो दिवं यत्र सः ॥

अपि च

कीर्तिर्दिक्करिकान्तदन्तमुसलप्रोद्भूतलास्यक्रमं
क्वापि क्वापि हिमाद्रिमू····महीसोत्प्रासहासस्थितिम् ।
क्वाप्यैरावणनागराजजनितस्पर्धानुबन्धोद्धुरं
भ्राम्यन्ती भुवनत्रयं त्रिपथगेवाद्यापि न श्राम्यति ॥

सं० ११०० भाद्रपदि २ चन्द्रे कल्याणकदिने प्रशस्तिरियं साधुसर्वदेवेनोत्कीर्णेति ।

(इण्डियन् आण्टिक्वेरी १४।९–१०)

---

## ( ३४ )

## सत्यवर्ममहीपतेर्दानपत्रम् ।

ॐम् ॥ स्वस्ति अमरपुरानुकारिणः सर्वर्तुसुखरमणीयाद्विजयवतः कलिङ्गनगरवासकान्महेन्द्राचलामलशिखरप्रतिष्ठितस्य सचराचरगुरोः सकलभुवननिर्माणैकसूत्रधारस्य शशाङ्कचूडामणेर्भगवतो गोकर्णस्वामिनश्चरणकमलयुगलप्रणामाद्विगतसर्वकलिकलङ्कोऽनेकाहवसंक्षोभजनितजयशब्दप्रतापोपनतसमस्तसामन्तचक्रचूडामणिप्रभामञ्जरीपुञ्जरञ्जितवरचरणः सितकुमुदकुन्देन्द्ववदात[यशाः] ध्वस्तारातिकुलाचलो नयविनयदयादानदाक्षिण्यशौर्यौदार्यसत्यत्यागादिगुणसंपदाधारभूतो निजनिस्त्रिंशधारोपार्जितसकलकलिङ्गाधिराज्यः परममाहेश्वरो मातापितृपादानुध्यातो गङ्गामलकुलतिलकमहा-

राजश्रीमद्देवेन्द्रवर्मसूनुः श्रीसत्यवर्मदेवो गलेल्लविषये तरुग्रामवासिनः कुटुम्बिनः समाज्ञापयति—विदितमस्तु वो यथायं मया विदितसकलपरमार्थतत्त्वेनाभिमतदेवतायै नूङ्कवपोसे स्वामित्यै सूर्योपरागे उदकपूर्वकं तारुग्रामदेवाग्रहारं कृत्वा सर्वकरभरैः परिहृत्यांचन्द्रतारकं मातापित्रोरात्मनश्च पुण्याभिवृद्धये संप्रदत्त इति । अखण्डितब्रह्मदेयं शैवस्थानकमिदं खण्ड्यमगुरवपुत्रकमलासनभट्टारकेणोपार्जितम् इदानीं प्रदक्षिणं(प्रतिदिशं) सीमालिङ्गानि लिख्यते—पूर्वस्यां दिशि त्रिवृतटाकखेतु आग्नेय्यां दिशि अर्जुनडोङ्कः दक्षिणेन गिरिनाशिका नैर्ऋत्यां दिशि पर्वत पश्चिमेन मेरुपाषाण वायव्यस्यां दिशि अक्षलोङ्क उत्तरेण अलिशिलातल ईशान्यस्यां दिशि उत्पलवापी खेतु ॥

अत्र व्यासगीतानि भवन्ति—

'बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते ॥
हिरण्यमेकं गामेकां भूमेरप्येकमङ्गुलम् ।
हरन्नरकमायाति यावदाभूतसंप्लवम् ॥'

आदित्य, पुनरपि गलेलै धान्यसहस्रकस्य भूमिः तद्विषये ग्रामानुग्रामे तण्डुलंमुरयघृततालि गलेलै पोलै खाण्डी । गाङ्गेयवंशसंवछ(त्स)रशतानां एकपञ्चाशत् ॥ श्रीरहस्यखण्डिमपुत्रवीरपल्लिखितोत्कीर्णमिति ॥

(इण्डियन् आण्टिक्केरी १४।१०–१२)

---

## ( ३९ )

## चालुक्यवंशोद्भूतराजराजापरनामश्रीविष्णुवर्धनमहीपतेर्दानपत्रम् ।

श्रीधाम्नः पुरुषोत्तमस्य महतो नारायणस्य प्रभो-
　नाभीपङ्करुहाद्बभूव जगतः स्रष्टा स्वयंभूस्ततः ।

जज्ञे मानससूनुरत्रिरिति यस्तस्मान्मुनेरत्रितः
सोमो वंशकरः सुधांशुरुदितः श्रीकण्ठचूडामणिः ॥
तस्मादासीत्सुधासूतेर्बुधो बुधनुतस्ततः ।
जातः पुरूरवा नाम चक्रवर्ती सविक्रमः ॥

तस्मादायुरायुषो नहुषस्ततो ययातिश्चक्रवर्ती वंशकर्ता ततः पुरुरिति चक्रवर्ती । ततो जनमेजयोऽश्वमेधत्रितयस्य कर्ता ततः प्राचीशस्तस्मात्सैन्ययाती ततो हयपतिस्ततः सार्वभौमस्ततो जयसेनस्ततो महाभौमस्तस्मादेशानकस्ततः क्रोधाननः । ततो देवकिः देवकेः ऋभुकस्तस्मात् ऋक्षकः । ततो मतिवरः सत्रयागयाजी सरस्वतीनदीनाथः ततः कात्यायनः कात्यायनान्नीलः ततो दुष्यन्तः तत आर्यो गङ्गायमुनातीरे यदविच्छिन्नान्निखाय यूपान् क्रमशः कृत्वा तथाश्वमेधान्नाम महाकर्म भरत इति योऽलभत । ततो भरताद्भूमन्युः तस्मात्सुहोत्रः ततो हस्ती । ततो विरोचनः तस्मादजमीलः ततः संवरणः ततश्च तपनसुतायास्तपत्याश्च सुधन्वा । ततः परिक्षित् । ततो भीमसेनः । ततः प्रदीपनः तस्माच्छन्तनुः ततो विचित्रवीर्यः । ततः पाण्डुराजः ।

ततः आर्या[1]

पुत्रास्तस्य च धर्मजभीमार्जुननकुलसहदेवाः ।
पञ्चेन्द्रियवत्पञ्च स्युर्विषयग्राहिणस्तत्र[2] ॥

येनादाहि विजित्य खाण्डवमठे(वनं) गाण्डीविणा वज्रिणं
युद्धे पाशुपतास्त्रमन्धकरिपोश्चालाभि दैत्यान्बहून् ।
इन्द्रार्धासनमध्यरोहि जयिना यत्कालिकेयादिका-
न्हत्वा स्वैरमकारि वंशविपिनच्छेदः कुरूणां विभोः ॥

ततोऽर्जुनादभिमन्युः ततः परिक्षित् ततो जनमेजयः ततः क्षेमुकः ततो नरवाहनः ततः शतानीकः तस्मादुदयनः ॥

ततः परं तत्प्रभृतिष्वविच्छिन्नसंतानेष्वयोध्यासिंहासनासीनेष्वेकान्नषष्टिचक्रवर्तिषु तद्वंश्यो विजयादित्यो नाम राजा विजिगीषया दक्षि-

---

१. फ्लीट पण्डितेन तु 'आर्या' इत्यग्रिमेण 'पुत्रा' इति पदेन संयोज्य 'आर्या-पुत्राः' इत्येकं पदं विधाय 'पुत्रास्तस्य च' इत्याद्यार्या गद्यतां नीता. २. 'ग्रहिणः' इति मुद्रितः पाठः.

णापथं गत्वा त्रिलोचनपल्लवमधिक्षिप्य दैवदुरीहया लोकान्तरमगमत् । तस्मिन्संकुले पुरोहितेन सार्धमन्तर्वत्नी तस्य महादेवी मुडिवेमुनामाग्रहारं कतिपयाभिरन्तःपुरकान्ताभिः कञ्चुकिभिश्च सहोपगम्य तद्वास्तव्येन विष्णुभट्टसोमयाजिना दुहितृनिर्विशेषमभिरक्षिता सती विष्णुवर्धनं नन्दनमसूत । सा तस्य च कुमारकस्य मानव्यसगोत्रहारीतिपुत्रद्विपक्षगोत्रक्रमोचितानि कर्माणि कारयित्वा तमवर्धयत् । स च मात्रा विदितवृत्तान्तः सन्निर्गत्य चलुक्यगिरौ नन्दां भगवतीं गौरीमाराध्य कुमारनारायणमातृगणांश्च संतर्प्य श्वेतातपत्रैकशङ्खपञ्चमहाशब्दपालिकेतनप्रतिढक्का वराहलाञ्छनपिञ्छकुन्तसिंहासनमकरतोरणकनकदण्डगङ्गायमुनादीनि स्वकुलक्रमागतानि निक्षिप्तानीव साम्राज्यचिह्नानि समादाय कदम्बगङ्गादिभूमिपान्निर्जित्य सेतुनर्मदामध्यं सार्धसप्तलक्षं दक्षिणापथं पालयामास ।

श्लोकः—

तस्यासीद्विजयादित्यो विष्णुवर्धनभूपतेः ।<br>
पल्लवान्वयजाताया महादेव्याश्च नन्दनः ॥

तत्सुतः पोलकेशीवल्लभः तत्पुत्रः कीर्तिवर्मा । तस्य तनयः स्वस्तिश्रीमतां सकलभुवनसंस्तूयमानमानव्यसगोत्राणां हारीतिपुत्राणां कौशिकीवरप्रसादलब्धराज्यानां मातृगणपरिपालितानां स्वामिमहासेनपादानुध्यातानां भगवन्नारायणप्रसादसमासादितवरवराहलाञ्छनेक्षणक्षणवशीकृतारातिमण्डलानां अश्वमेधावभृथस्नानपवित्रीकृतवपुषां चालुक्यानां कुलमलंकरिष्णोः सत्याश्रयवल्लभेन्द्रस्य भ्राता कुब्जविष्णुवर्धनोऽष्टादशवर्षाणि वेङ्गीदेशमपालयत् । तदात्मजो जयसिंहवल्लभस्त्रयस्त्रिंशतम् । तदनुज इन्द्रराजनन्दनः सप्तदिनानि । तत्सुतो विष्णुवर्धनो नव वर्षाणि । तत्सूनुर्माङ्गियुवराजः पञ्चविंशतिम् । तत्पुत्रो जयसिंहस्त्रयोदश । तदवरजः कोक्किलिः षण्मासान् । तस्य ज्येष्ठो भ्राता विष्णुवर्धनस्तमुच्छित्य सप्तत्रिंशतमब्दान् । तत्पुत्रो विजयादित्यभट्टारकोऽष्टादश । तदनुजो विष्णुवर्धनः षट्त्रिंशतम् । तत्सूनुर्विजयादित्यनरेन्द्रमृगराजश्चाष्टाचत्वारिंशतम् । तत्सुत कलिविष्णुवर्धनोऽध्यर्धवर्षम् । तत्सुतो गुङ्गविजयादि-

त्यश्चतुश्चत्वारिंशतम् । तद्भ्रातुर्**विक्रमादित्य**भूपतेस्तनयश्चा**लुक्यभीम**-स्त्रिंशतम् । तत्सुतः **कोल्लबिगण्डविजयादित्यः** षण्मासान् । तत्सूनु-**रम्मराजः** सप्तवर्षाणि । तत्सुतं **विजयादित्यं** बालमुच्छित्य **ताडपो** मासमेकम् । तं जित्वा चालुक्यभीमतनयो **विक्रमादित्य** एकादश मासान् । तत्ताडपराजसुतो **युद्धमल्लः** सप्तवर्षाणि । अम्मराजानुजो **राजभीमो**ऽब्दान्द्वादशाभुनक् । युद्धे युद्धमल्लं तं धाव्या निर्घात्य धरुणिर (?)-**सुताम्मभूपः** क्ष्मां पञ्चविंशतिं वर्षाण्यपात् ।

द्वैमातुरोऽम्मराजस्य **दानार्णव** इति स्मृतः ।
चतुःषष्टिकलाभिज्ञः समास्तिस्रोऽभुनग्भुवम् ॥
ततः परं पतिं लक्ष्मिमनुरूपमनायिकाम् (?) ।
सप्तविंशति वर्षाणि च्छाव एव तपः क्षमाम् (?) ॥
अथ दानार्णवाज्जातः कलावान्मृदुभिः करैः ।
राजा चालुक्यचन्द्रो यः क्ष्मातापमपाकरोत् ॥
सत्ये प्रतिष्ठिता लोका इति सत्यं वचो यतः ।
सर्वलोकाश्रये यस्मिन्सत्यराजे स्थितं जगत् ॥
निर्वक्रं वसुधाचक्रमरक्षत्क्षपिताहितः ।
न्याय्ये पथि नृपैराद्यैः स द्वादशसमाः समः ॥
**विमलादित्यदे**वाख्यस्ततस्तस्यानुजोऽदधत् ।
महीमण्डलसाम्राज्यं विजित्य विजयी रिपून् ॥

यस्य प्रज्वलितं प्रतापदहनं सोढुं न शक्ता भया-
द्रुत्वा काननमम्बुधिं च तरसा विद्वेषिणो विह्वलाः ।
दावौर्वाग्निपदेन तत्र च पुनस्तेनैव संतापिताः
श्रीपादामरपादपस्य महतीं छायां समाशिश्रियन् ॥

अपि च ।

सूर्यान्वये सुरपतिप्रतिमः प्रभावैः
**श्रीराजराज** इति यो जगति व्यराजत् ।

नाथः समस्तनरनाथकिरीटकोटि-
रत्नप्रभापटलपाटलपादपीठः ॥
जातस्ततस्तत्यशोजितराजतेजा
राजेन्द्रचोडनृपतिर्नृपचक्रवर्ती ।
दम्वं (?) प्रचण्डमददन्तिकपोलनिर्य-
द्दानाविलामरसरित्सलिलप्रवाहः ॥
सद्वीपां च प(चतु)रम्बुराशिपरिखां विश्वंभरां लीलया
दण्डेनैव विजित्य च प्रतिदिशं योऽतिष्ठिपत्सर्वतः ।
स्वैरोल्क्रान्तिनिवारणाय विजयस्तम्भान्स्वनामाङ्किता-
नालानानिव बद्धुमन्धमनसो दर्पेण दिग्दन्तिनः ॥
तस्यानुजां सुरूपामनुरूपां कुन्दवां महादेवीम् ।
स उपायत कृतकृत्यो विमलादित्यो जनस्तुत्यः ॥
समुद्ररशनां पृथ्वीं पृथ्वीं स भुजविक्रमात् ।
समरक्षत्समाः सप्त सप्तसप्तिसमः समः ॥
तस्माच्चालुक्यचूडामणिरथ विमलादित्यदेवान्महीश-
श्चोडक्ष्मापाललक्ष्म्या इव रचिततनोः कुन्दवायाश्च देव्याः ।
जातः **श्रीराजराजो** रजनिकरकुलश्रीमदम्भोधिराजो
राजद्राजन्यसेव्यामभृत भुजबलाद्राजलक्ष्मीं पृथिव्याः ॥
यो रक्षितुं वसुमतीं शशवत्सरेषु
वेदाम्बुराशिनिधिवर्तिषु (९४४) सिंहगेऽर्के ।
कृष्णद्वितीयदिवसोत्तरभद्रिकायां
वारे गुरोर्वणिजि लग्नवरेऽभिषिक्तः ॥
यस्योत्तमाङ्गं पट्टेन समबन्धि महीयसा ।
भर्तुं विश्वंभराभारं जनैरारोपितं चिरम् ॥
पृथ्वीमिमां यत्र पृथुप्रभावे रक्षत्यवर्गे क्षपितारिवर्गे ।
दूरीकृतावग्रहचोररोगाः प्रजा लभन्ते सफलं त्रिवर्गम् ॥

शौर्योदार्याभिमानाद्यगणितगुणजन्मानुरक्ता महिम्ना
प्रख्यातेनातिकृष्णा शशधरधवला सज्जनानां गणेन ।
पीता प्रीतेन कर्णाञ्जलिभिरभिनवा भाति दिग्देवतानां
नानावर्णा वितानश्रियमतनुतरा तन्वती यस्य कीर्तिः ॥
पित्रोर्वंशगुरू बभूवतुरलं यस्य स्फुरत्तेजसौ
सूर्याचन्द्रमसौ निरस्ततमसौ देवौ जगच्चक्षुषी ।
दंष्ट्राकोटिसमुद्धृताखिलमहीचक्रं महत्क्रीडया
विष्णोरादिवराहरूपमभवद्यच्छासने लाञ्छनम् ॥

स सर्वलोकाश्रयश्रीविष्णुवर्धनमहाराजाधिराजपरमेश्वरपरमभट्टारकपरमब्रह्मण्यः मातापितृपादानुध्यातः त्यागसिंहासनासीनः चण्डिकाप्रसादपरिलब्धसाम्राज्यचिह्नः गुद्द्वाडिविषयनिवासिनो राष्ट्रकूटप्रमुखान्कुटुम्बिनः सर्वान्समाहूय मन्त्रिपुरोहितसेनापतियुवराजदौवारिकप्रधानाध्यक्षानित्यादिशति—

आद्यन्तात्यन्तदूरात्समजनि जगतां ज्योतिषो जन्महेतु-
र्ब्रह्मा धाम प्रजानामभवदथ ततः कश्यपो नाम वेधाः ।
भारद्वाजस्ततोऽभून्मुनिरधिकतपास्तस्य गोत्रे पवित्रे
राज्ञामचि... ...पस्तम्बसूत्रे श्रुतिनिधिरुदगाच्चीडमार्यः क्रमेण ॥
यज्ञो... ...वर्चसः समुदितैर्यज्ञैर्विधौताङ्ह(तांह)सो
विज्ञाताखि... ...ाम सुतस्ततः कृतधियो जज्ञे कृतज्ञः कृती ।
ज्ञातिज्ञा... ...लवेदशास्त्रसमयः प्राज्ञः सदा पोषित-
यथा वसिष्ठो ...ननिधिर्गुरुज्ञसदृशो नीतिज्ञतायां भुवि ॥
तथानुरूपामभि... ...विदुषां वरिष्ठो निरुन्धतीं दोषमरुन्धतीं सः ।
पुत्रस्तय... ...रूपरूपः सतीमुपायच्छत माकवाख्याम् ॥
ब्रह्मास... ...ेरदितिकश्यपयोरिवाभू-
यो वेदशा... ...ानपाकृततमाः खलु चीडमार्यः ।
शिष्या... ...स्त्रसकलश्रुतिरश्मिजातैः
...ननाम्बुरुहबोधकरो गरीयान् ॥

नित्याभीष्टफलप्रदानरुचिरं लक्ष्मीनिवासास्पदं
　विभ्राणं गुरुतां प्रवुद्धसुमनःसंपूर्णशाखान्वितम्।
छायासंततिमाश्रितैश्च विबुधैः संस्तूयमानं सदा
　सेवित्वा सुखमास्यते द्विजवरैर्यं विप्रकल्पद्रुमम्॥

यद्गेहं सुचिरं विभाति पर(ठ)तां पुण्यैर्वटूनां पटु-
　व्यावृत्त्याविरतं क्रमात्क्षमपदे सामर्थ्यजुष्गो(मुद्घो)षणैः।
सायं प्रातरुपाहितं(ता) हुतिहुतस्वाहाप्रियप्रोच्चल-
　द्धामै(?)श्चापि समन्ततः कलिमलं प्रोत्सारयद्दूरतः॥

तस्मै समस्तजनताविशेषणा(का)य। रैसुतर्पितमहीदेवदेवगणाय। विप्रान्वयाब्धिशशभृत्प्रतिचन्द्राय(च्छन्दाय)। विद्वज्जनाङ्गीकृतविश्रुतानन्दाय। जन्मप्रभृति गीतवेदार्थतत्त्वाय। सन्मनोवसतिवास्तव्यात्मसत्त्वाय। लम्भितसरलत्वपरिलालितचरित्राय। शुम्भितमतिस्वसितजीवभृशपुत्राय (?)। सिद्धनिजनाथकृतिसेवितमनीषाय (?)। शुद्धमतिदूषितसमस्तजनदोषाय। संतताराधितनिजस्वामिपादाय। चिन्तितमनःस्थसुखदाभूतसुपादाय (?)। होमधूमविनिर्गतामितकलङ्काय। धीमत्प्रगीतरुचिरस्थिरस्वनामाङ्काय। सकलमुनिगणनुतापस्तम्बसूत्राय। तत्रसंगीत(?)भारद्वाजगोत्राय। सप्ततन्तुकृतयूपस्तम्भशोभाय। सप्ताश्वरूपसदृशात्मतनुलाभाय। नित्यजनतोचितसुसत्यसणयुक्ताय(?)। पत्यभिलषितकार्यनिःपत्तिसक्ताय। परमपुरुषार्थसंपादनपटिष्ठाय। परमेश्वरस्मरणपालनवरिष्ठाय। सकलार्थशास्त्रपरिनिश्चितविनोदाय। सुकुमारताधिकसरोजनिभपादाय। धाराकरेणाग्रहारीकृतः कोरुसेछिनामा ग्रामं इन्दूपरागे दत्तो मया आचन्द्रतारकं हि तिष्ठेत्। तस्यावधिव्यक्तिरेपोच्यतेऽद्य। पूर्वतः कूडकुसीमा। आग्नेयतः मुण्डकालियसीमा। दक्षिणतः वानपल्लियु संपतनिययु मामण्डेटियु सीमैव सीमा। नैर्ऋत्यतः गोदावरियसीमा। पश्चिमतः बूरुवुडोग्गुसीमा। वायव्यतः वेनेटियु मासरयु सीमैव सीमा। उत्तरतः मासरपोन्बड्डवयु खलमेण्डिकालियुसीमा। ईशानतः एरुवङ्कयुत्तरमुन कडलिभाटिसीमा॥ अस्योपरि न केनचिद्बाधा क-

रणीया । यः करोति स पञ्चमहापातकैर्युक्तो भवति । तथा चोक्तं भगवता व्यासादिमहर्षिप्रकरेणापि—

स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्ठिं वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
आज्ञप्ति(प्तेः) कटकेशो राचियपेड्डेरिभीमनामतनूजः ।
कर्ता चेतनभट्टः काव्यानां लेखकोऽस्य गण्डाचार्यः ॥[1]

अस्मिन्ग्रामे प्रतिवर्षं भूपसिद्धाय ग्रहणम् पञ्चविंशतिनिष्काणि शतद्वयसहितानि पञ्चाशद्धान्यखण्डकानि च ॥

(इण्डियन् आण्टिक्वेरी १४।५०-५५)

---

# (३६)

## कुलोत्तुङ्गचोडदेवमहीपाश्रितकाटदण्डाधिनाथस्य दानपत्रम् ।

जयति जलधिकन्यावक्त्रपद्मांशुमाली
सकलभुवनसृष्टित्राणसंहारहेतुः ।
उपनिषदवगम्यो योगिविज्ञानवेद्य-
स्त्रिदशवरवचोभिः स्तूयमानो मुकुन्दः ॥
जयति जगति नित्यं सोमवंशो महीभृ-
च्छिरसि निहितपादः संश्रयः कीर्तिवल्ल्याः ।
जलधिवलयितोर्वीचक्रवालालवाला-
द्रिपुनृपरुधिरोदैरुक्षितादुद्गतायाः ॥

स्वस्ति श्रीमतां सकलभुवनसंस्तूयमानमानव्यसगोत्राणां हारीतिपुत्राणां कौशिकीवरप्रसादलब्धराज्यानां मातृगणपरिपालितानां स्वामिमहासेनपादा-

---

१. स्कन्धकं नाम च्छन्दः. एतदपि फ्लीटपण्डितेन गद्यान्तः पातितम्.

नुध्यातानां भगवन्नारायणप्रसादसमासादितवरवराहलाञ्छनेक्षणक्षणवशीकृतारातिमण्डलानामश्वमेधावभृथपवित्रीकृतवपुषां चालुक्यानां कुलमलंकरिष्णोः सत्याश्रयवल्लभेन्द्रस्य भ्राता कुब्जविष्णुवर्धनोऽष्टादशवर्षाणि वेङ्गीदेशमपालयत्। तत्पुत्रो जयसिंहस्त्रिंशत्[1]। तत्कनियानिन्द्रराजः[2] सप्ताहम्। तत्पुत्रो विष्णुवर्धनो नववर्षाणि। तत्पुत्रो मङ्गियुवराजः पञ्चविंशतिम्। तत्पुत्रो जयसिंहस्त्रयोदश। तत्कनीयान्कोकिलिः षण्मासान्। तद्भ्राता विष्णुवर्धनः सप्तत्रिंशत्। तत्सूनुर्विजयादित्योऽष्टादश। तत्सूनुर्विष्णुवर्धनः षट्त्रिंशत्। तत्सूनुर्नरेन्द्रो[3]ऽष्टाचत्वारिंशत्। तत्सुतः कलिविष्णुवर्धनोऽध्यर्धवर्षम्। तत्सूनुर्गुङ्गविजयादित्यश्चतुश्चत्वारिंशत्। तद्भ्रातृविक्रमादित्यपुत्रश्चालुक्यभीमस्त्रिंशत्। तत्सूनुर्विजयादित्यः षण्मासान्। तत्सूनुरम्मराजः सप्तवर्षाणि। विक्रमादित्यभ्रातृपुत्रस्ताडपो मासम्। चालुक्यभीमसूनुर्विक्रमादित्य एकादशमासान्। तत्सूनुर्युद्धमल्लः[4] सप्तवर्षाणि। अम्मराजानुजो राजभीमो द्वादश। तत्सूनुरम्मराजः पञ्चविंशतिम्। तज्ज्येष्ठो दानार्णवस्त्रिंशत्[5]। तत्पुत्रः शक्तिवर्मा द्वादश। तदनुजो विमलादित्यः सप्त। तत्पुत्रो राजराजदेव एकचत्वारिंशत्। तत्पुत्रः श्रीकुलोत्तुङ्गचोडदेव एकोनपञ्चाशत्। तत्सुतो विक्रमचोडः पञ्चदश। तत्पुत्रे श्रीकुलोत्तुङ्गचोडदेवे राज्यं प्रशासति तद्वंशराजप्रसादलब्धनानादेशपरिवृतं परम्परागतमण्डलेशाधिष्ठितं वेङ्गीमण्डले महासरः स्थिरतरमस्ति।

तत्रासीत्सरसीपुरीति जलधौ विष्णोः पुरीं द्वारका-
मुद्यल्लावणवारिदोषकलुषां न्यक्कुर्वती यानिशम्।
मातेव स्वपयःप्रवाहनिवहैः सुस्वादुभिः सादरं
स्वाङ्कं संश्रितमण्डलेश्वरमहीचक्रं स्वयं रक्षति॥

१. पूर्वमुद्रिते विष्णुवर्धनदानपत्रे तु 'त्रयस्त्रिंशतम्' इत्यस्ति. २. 'तदनुज इन्द्रराजनन्दनः' इति विष्णुवर्धनदानपत्रे पाठः. ३. 'विजयादित्यनरेन्द्रमृगराजः' इति विष्णुवर्धनदानपत्रे पाठः. ४. 'तताडपराजसुतो युद्धमल्लः' इति विष्णुवर्धनदानपत्रधृतः पाठः. ५. 'त्रिंशः' इति विष्णुवर्धनदानपत्रे शोधितः पाठः.

गर्वाधद्विजिगीषया रिपुगणाः संप्राप्य वेलातलं
लोलत्स्यन्दनवाजिवारणभटा जेतुं न शक्ताः पुनः।
युद्धालोकनलोलवैरिललनासोल्लासहासोदया-
लज्जावद्धदनाः प्रविश्य सरसीं यान्त्येकतां कर्दमैः॥

तस्याः पतिः को(कु)लनिकाटमनायकोऽभू-
त्प्रख्यातधर्मनिचयः प्रततोरुकीर्तिः।
स्फूर्जत्स्वबाहुबलनिर्जितवैरिवर्गः
सर्वाश्रयो नयनिधिर्भुवि सत्यसंधः॥

यो धर्मे धर्मपुत्रप्रतिनिधिरवनित्राणने कार्तवीर्यः
प्रायः शौर्ये किरीटी स्फुटमहिमरुचा तुल्य एव प्रतापे।
औदार्ये कर्णकल्पः स्मर इव वपुषि क्ष्मासदृक्षः क्षमायां
सौजन्ये यस्य लोके कथमपि सदृशो विक्रमादित्य एव॥

योऽदृश्यत सतां भूत्यै जलदुर्गे श्रिया सह।
भुवनत्रितयं भासा भासयन्व्योम चन्द्रवत्॥

यः सर्वामवनिमरक्षदक्षतश्रीः सेनाभिर्बहुरणकेलिनिर्जितारिः।
वीरश्रीवदनविलासदर्पणाभो नीतिज्ञो नियमितवागतिप्रगल्भः॥

द्विजजनपरिरक्षादक्षमक्षय्यलक्ष्मीं
प्रशमितरिपुपक्षं काङ्क्षिणां कल्पवृक्षम्।
गुणमणिगणभूषाकल्पमाकल्पमुर्व्या
धृततनुमिव धर्मं मन्वते मानवा यम्॥

सुधृता येन धरित्री निःशङ्कं निर्जितारिवर्गेण।
चिरतरकालं कृतिना कृतयुगवच्छ्रीसमृद्धेयम्॥

विदुषां बहवो ग्रामा देवानां भूरिहर्म्याणि।
जलपरिपूर्णतटाका देशे देशे विनिर्मिता येन॥

यस्मिन्काङ्क्षाबहुलं ददति द्रव्यं प्रभूतमर्थे(र्थि)भ्यः।
उपपदरहिता जाताश्चिन्तामणिकामधेनुकल्पागाः॥

यस्यासिधारासुनिपीतमम्बु द्विपच्छिरश्छेदनकर्महेतु।
प्रवर्तुलं वैरिपुरं त्रिनेत्रेष्वश्रुच्छलेनेव कृतस्वकार्यम्॥

यत्खड्गहस्तपरिपातमदान्धमत्त-
मातङ्गमस्तकविनिर्गतमौक्तिकौघैः।
संयत्यरातिनिकरान्हसतीव नाना-
दिक्षु पलायनपरान्महती जयश्रीः॥

कीर्तिर्यस्य मनोहरा त्रिभुवनं विभ्राजयन्ती भृशं
स्वच्छासत्कुमुदाकरप्रियकरी दिङ्मण्डलं तन्वती।
कुर्वाणापि सदा समस्तजगतां हर्षं द्विपद्योपितां
वक्त्राम्भोजसुदुःसहा विजयते ज्योत्स्नेव शीतद्युतेः॥

स स्वामिनश्चोडदेवस्य तस्य प्राप्य प्रसादादथ ग्रामवर्यम्।
लक्ष्मीपतीशप्रसादाप्तलक्ष्मीर्दातुं द्विजेभ्यो धियं संदधार॥

ततश्च—

शाकाब्दानां प्रमाणे रसविशिखवियच्चन्द्रसंख्यां (१०५६) प्रयाते
देशे सावत्तिलीतिक्षितितलविदिते पोण्डुवग्रामयुक्तम्।
सार्द्रक्षे पूर्वपक्षे विषुवति सुतिथौ मण्डदोरग्रहारं
प्रादाद्विद्वद्द्विजेभ्यः स्थिरतरमकरं काटदण्डाधिनाथः॥

तथैतद्ग्रामसीमान्तर्वर्तिनो ये कुटुम्बिनः।
विट्छूद्रतक्षरजककर्मारतिलपूतकाः॥
सुवर्णकंसचर्मास्त्रकुम्भकाराश्च नापिताः।
अजगोपालकाश्चैव चण्डालाद्यास्तथापरे॥
तैर्देयकरमप्येभ्यो ब्राह्मणेभ्योऽददात्तदा।
दत्त्वैवमग्रहारं तमित्थमाज्ञापयत्यसौ।
तद्राष्ट्रकूटप्रमुखान्समाहूय कुटुम्बिनः।
दत्तमित्थं मया सर्वमेतद्विदितमस्तु वः॥

---

१. 'वैरिपुरंध्रिनेत्रेषु' इत्युचितः पाठः. २. 'परिघात' इत्युचितः पाठः.

प्रतृगृहीतृब्राह्मणनामानि—तत्र भारद्वाजाः द्रोणार्यः मेडार्यः सूरार्यः नूङ्कार्यः गुण्डार्यः वेन्नार्यः नामार्यः वासनार्यः नामार्यः मधुराधिपार्यः दोड्डार्यः माधवार्यः सिव्वार्यः कोम्मार्यः वामार्यः पोटार्यः गोविन्दार्यः चन्द्रार्यः भागिनः—सोमनार्यः नित्तनार्यः सूरार्यः कुण्डिनाः—भीमार्यः उर्यकोण्डार्यः विष्ण्वार्यः अर्धिनः—कोम्मार्यः कृष्णार्यः वामार्यः कामार्यः नन्दार्यः कोम्मार्यः मण्डनार्यः कृष्णार्यः भीमार्यः वामार्यः दारार्यः वाधूलाः—आदित्यार्यः ईश्वरार्यः करुकनार्यः हरिताः—विष्ण्वार्यः माधवार्यः मल्लार्यः कोटार्यः द्रोणार्यः कामार्यः रेमार्यः नारायणार्यः भागिनः—नामार्यौ द्वौ मैत्रावरुणौ सत्युनार्यौ भागी सूरार्यः कौशिकाः—नूङ्कार्यः कोम्मार्यः सूरार्यः अर्धिनः—तातार्यः विष्ण्वार्यः पेन्नार्यः बोप्पार्यः श्रीधरार्यः मैत्रेयः—शंकरार्यः वात्सः द्रोणार्यः कपिलः पोटार्यः यस्कः—अय्यनार्यः आत्रेयाः—राघवार्यः भागिनः—ताडार्यः अलोडार्यः अर्धिनौ शौनकाः पोटार्यादयः पञ्च सार्धभागिनः पराशरौ कोम्मार्यः विष्ण्वार्यः पुरुकुत्सः मलयाण्डार्यः भागिनः काश्यपाः—अन्नार्यः अप्पार्यः अर्धिनौ—वासुदेवार्यः मावार्यः सूरार्यः अन्नार्यः शासनकाव्यकृच्छंकरनारायणार्यः भागिनः ईश्वरस्यैको भागः विष्णोरेको भागः। अथ पोण्डुवयुक्तस्यास्य ग्रामस्य क्षेत्रसीमानः—पूर्वतः—पोण्डुव कोम्मर यिलियूरि मुय्यनिकुट्टुगुण्ट अटवेन्ननिगुण्ट। आग्नेयतः—पोण्डुव यिलियूरि नलमियय्पमुल्वु अटपेनुङ्गोलुनय्पमुल्वुम् गरुवुगुण्ट लुङ्गाण्डि यावगुमियु नूङ्क निगुण्टपु । दक्षिणतः—नूङ्कनिगुण्टम् वासिपायिनयमरुपट्टु अटपहिण्डिगुण्ट नल्लुमु । निर्ऋतितः—कोङ्किलिपूण्डि पाटिपल्लुमटि मुय्यनिकुट्टुगुण्ट । पश्चिमतः—लेल्लुगुण्ट कोलु। वायव्यतः—उण्डन्दोर्टि पासुदोव गोवमि मुय्यनिकुट्टु अट उण्डन्दोर्टि गोवमि काकण्डिबाल मुय्यनिकुट्टु । उत्तरतः—मद्दिगुण्ट अट मेलनिगुण्टयु नेरियनिगुण्टयु नावनिगुण्टयु नटयीयूरि पल्लियैन पोण्डुव स्वाङ्कम्राम्यर्ति मुय्यनिकुट्टु अट पनुलवाण्डूगुण्टयुम् बल्लनिकाटितलयु । ईशानतः—प्रान्तगुण्ट ।

इतः परं न कार्योऽस्य ग्रामस्योपद्रवो नरैः।
लोभादुपद्रवं तस्य कुर्याद्यः स नराधमः॥
यायात्पञ्चमहापापी द्रोही सोमेश्वरस्य च।
गङ्गायां गोसहस्रस्य वधपापमवाप्नुयात्॥

अस्ति व्यासोक्तमपि—

'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः॥

तथा, बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥ इति॥

लेखकः कन्नाचार्यसूनुः पल्लाचार्यः।

(इण्डियन् आण्टिक्केरी १४।५६-५९)

---

## (३७)

## श्रीभद्रबाहुप्रशस्तिः।

स्वस्ति॥

जितं भगवता श्रीमद्धर्मतीर्थविधायिना।
वर्धमानेन संप्राप्तसिद्धिसौख्यामृतात्मना॥
लोकालोकद्वयाधारवस्तु स्थास्नु चरिष्णु च।
सच्चिदालोकशक्तिः स्वा व्यश्नुते यस्य केवला॥
जगत्यचिन्त्यमाहात्म्यपूजातिशयमीयुषः।
तीर्थकृन्नामपुण्यौघमहार्हन्त्यमुपेयुषः॥
तदनु श्रीविशाले यज्जयत्यद्य जगद्धितम्।
तस्य शासनमव्याजं प्रवादिमतशासनम्॥

अथ खलु सकलजगदुदयकरणोदितातिशयगुणास्पदीभूतपरमजिनशासनसरससमभिवर्धितभव्यजनकमलविकसनवितिमिरगुणकिरणसहस्रमहोति- महावीरसवितरि परिनिर्वृते भगवत्परमर्षिगौतमगणधरसाक्षाच्छिष्यलो-

हार्य-जम्बु-विष्णुदेव-अपराजित-गोवर्धन-भद्रबाहु-विशाखप्रोष्ठिल-क्षत्रिकार्य-जयनाम-सिद्धार्थ-धृतिषेण-बुद्धिलादिगुरुपरम्परीणक्रमाभ्यागतमहापुरुषसंततिसमवद्योतितान्वयभद्रबाहुस्वामिना उज्जयिन्यामष्टाङ्गमहानिमित्ततत्त्वज्ञेन त्रैकाल्यदर्शिना निमित्तेन द्वादशसंवत्सरकालवैषम्यमुपलभ्य कथिते सर्वः संघ उत्तरापथाद्दक्षिणापथं प्रस्थितः । आर्षेणैव जनपदमनेकग्रामशतसंख्यमुदितजनधनकनकसस्यगोमहिषाजाविक(कु)लसमाकीर्णं प्राप्तवान् । अतः आचार्यः [1]प्रभाचन्द्रेणामावनितलललामभूतेऽथास्मिन्कटवप्रनामकोपलक्षिते विविधतरुवरकुसुमदलावलीविकचनाशबलविपुलसजलजलदनिवहनीलोपलतले वराहद्वीपिव्याघ्रर्क्षतरक्षुव्यालमृगकुलोपचितोपत्यकाकंदरदरीमहागुहागहनाभोगवति समुत्तुङ्गशृङ्गे शिखरिणि जीवितशेषमल्पतरकालमवबुध्याध्वनः सुचकितस्तपःसमाधिमाराधयितुमापृच्छ्य निरवशेषेण संघं विसृज्य शिष्येणैकेन पृथुलकास्तीर्णतलासु शिलासु शीतलासु स्वदेहं सन्यस्याराधितवान् । क्रमेण सप्तशतमृषीणामाराधितमिति । जयतु जिनशासनमिति ॥

(बी० ल० राइसपण्डितमुद्रिते 'इन्स्क्रिप्शन्स् ऐट् श्रवलबेल्गोला' नामकपुस्तके प्रथमो लेखः.)

---

# (३८)

## श्रीमल्लिषेणप्रशस्तिः ।

(उत्तरपार्श्वे) (पार्श्वनाथबस्ती)

श्रीमन्नाथकुलेन्दुरिद्रपरिषद्वन्द्यः श्रुतश्रीसुधा-
धाराधौतजगत्तमोपहमहः पिण्डप्रकाण्डं महत् ।
यस्मान्निर्मलधर्मवार्धिविपुलश्रीर्वर्धमाना सतां
भर्तुर्भव्यचकोरचक्रमवतु श्रीवर्धमानो जिनः ॥
जीयादर्थयुतेन्द्रभूतिविदिताभिख्यो गणे गौतम-
स्वामी सप्तमहर्द्धिभिस्त्रिजगतीमापादयन्पादयोः ।

---

१. प्रभाचन्द्रेण सहेत्यर्थः.

यद्बोधाम्बुधिमेत्य वीरहिमवत्कुत्कील(ग्रोप)कण्ठाद्बुधा-
म्भोदात्ता भुवनं पुनाति वचनस्वच्छन्दमन्दाकिनी ॥
तीर्थेशादशन(दर्शन)भवन्नयदक्सहस्र-
विस्रब्धबोधवपुषः श्रुतकेवलीन्द्राः ।
निर्भिन्दतां विबुधवृन्दशिरोभिवन्द्याः
स्फूर्जद्वचःकुलिशतः कुमताद्रिमुद्राः ॥
वर्ण्यः कथं नु महिमा भण भद्रबाहो-
र्मोहोरुमल्लमदमर्दनवृत्तबाहोः ।
यच्छिष्यताप्तसुकृतेन स चन्द्रगुप्तः
शुश्रूष्यते स सुचिरं वनदेवताभिः ॥
वन्द्यो विभुर्भुवि न कैरिह कौण्डकुन्दः
कुन्दप्रभाप्रणयिकीर्तिविभूषिताशः ।
यश्चारुचारणकराम्बुजचञ्चरीक-
श्चक्रे श्रुतस्य भरते प्रयतः प्रतिष्ठात्(म्) ॥
वन्द्यो भस्मकभस्मसात्कृतिपटुः पद्मावतीदेवता-
दत्तोदात्तपदः स्वमन्त्रवचनव्याहूतचन्द्रप्रभः ।
आचार्यः स समन्तभद्रगणभृद्येनेह काले कलौ
जैनं वर्त्म समन्तभद्रमभवद्भद्रं समन्तान्मुहुः ॥
चूर्णि(:) ॥
यस्यैवंविधा वादारम्भसंरम्भविजृम्भिताभिव्यक्तयः सूक्तयः ॥
वृत्त(म्) ॥
पूर्वं पाटलिपुत्रमध्यनगरे भेरी मया ताडिता
पश्चान्मालवसिन्धुठक्कविषये काञ्चीपुरे वैदिशे ।
प्राप्तोऽहं करहाटकं बहुभटं विद्योत्कटं संकटं
वादार्थी विचराम्यहं नरपते शार्दूलविक्रीडितम् ॥
अवटुतटमटति झटिति स्फुटपटुवाचाटधूर्जटेरपि जिह्वा ।
वादिनि समन्तभद्रे स्थितवति तव सदसि भूप कास्थानै(न्ये)षाम् ॥

योऽसौ घातिमलद्विषद्बलशिलास्तम्भावलीखण्डन-
ध्यानासिः पटुरर्हतो भगवतः सोऽस्य प्रसादीकृतः ।
छात्रस्यापि स सिंहनन्दिमुनिना नो चेत्कथं वा शिला-
स्तम्भो राज्यरमागमाध्वपरिघस्तेनासिखण्डो घनः ॥

वक्रग्रीवमहामुनेर्दशशतग्रीवोऽप्यहीन्द्रो यथा
जातं स्तोतुमलं वचोबलमसौ किं भग्नवाग्मिव्रजम् ।
योऽसौ शासनदेवताबहुमतो ह्रीवक्रवादिग्रह-
ग्रीवोऽस्मिन्नथ शब्दवाच्यमवदन्मासान्समासेन षट् ॥

नवस्तोत्रं तत्र प्रसरति कवीन्द्राः कथमपि
प्रणामं वज्रादौ[1] रचयत परं नन्दिनि मुनौ ।
नवस्तोत्रं येन व्यरचि सकलार्हत्प्रवचन-
प्रपञ्चान्तर्भावप्रवणवरसंदर्भसुभगम् ॥

महिमा स पात्रकेसरिगुरोः परं भवति यस्य भक्त्यासीत् ।
पद्मावतीसहायात्रिलक्षणकदर्थनं कर्तुम् ॥

सुमतिदेवममुं स्तुत येन वः सुमतिसप्तकमाप्ततया कृतम् ।
परिहृतापदतत्त्वपदार्थिनां सुमतिकोटिविवर्ति भवार्तिहृत् ॥

उपेत्य सम्यग्दिशि दक्षिणस्यां कुमारसेनो मुनिरस्तमाप ।
तत्रैव चित्रं जगदेकभानोस्तिष्ठत्यसौ तस्य तथा प्रकाशः ॥

धर्मार्थकामपरिनिर्वृतिचारुचिन्त-
श्चिन्तामणिः प्रतिनिकेतमकारि येन ।
स स्तूयते सरससौख्यभुजा सुजात-
श्चिन्तामणिर्मुनिवृषो न कथं जनेन ॥

चूडामणिः कवीनां चूडामणिनामसेव्यकाव्यकविः ।
श्रीवर्धदेव एव हि कृतपुण्यः कीर्तिमाहर्तुम् ॥

---

१. वज्रनन्दिनि.

चूर्णि(ः) ॥

य एवमुपश्लोकितो दण्डिना ।

जह्नोः कन्यां जटाग्रेण वभार परमेश्वरः ।

श्रीवर्धदेव संधत्से जिह्वाग्रेण सरस्वतीम् ॥

पुष्पास्त्रस्य जयो गणस्य भरणं भूभृच्छिखाघट्टनं

पञ्चास्तु महेश्वरस्तदपि न प्राप्तुं तुलामीश्वरः ।

यस्याखण्डकलावतोऽष्टविलसद्दिक्पालमौलिस्खल-

त्कीर्तिस्वःसरितो महेश्वर इह स्तुत्यः स कैः स्यान्मुनिः ॥

यः सप्ततिमहावादान् जिगायान्यानथामितान् ।

ब्रह्मकक्षोऽर्चितः सोऽर्च्यो महेश्वरमुनीश्वरः ॥

तारा येन विनिर्जिता घटकुटीगूढावतारा समं

बौद्धैर्यो धृतपीडपीडितकुहग्देवार्थसेवाञ्जलिः ।

प्रायश्चित्तमिवाङ्घ्रिवारिजरजःस्नानं च यस्याचर-

द्दोषाणां सुगतः स कस्य विषयो देवाकलङ्कः कृती ॥

चूर्णि(ः) ॥

यस्येदमात्मनोऽनन्यसामान्यनिरवद्यविद्याविभवोपवर्णनमाकर्ण्यते ।

राजन्साहसतुङ्ग सन्ति बहवः श्वेतातपत्रा नृपाः

किं तु त्वत्सदृशा रणे विजयिनस्त्यागोन्नता दुर्लभाः ।

तद्वत्सन्ति बुधा न सन्ति कवयो वादीश्वरा वाग्मिनो

नानाशास्त्रविचारचातुरधियः काले कलौ मद्विधाः ॥

नमो मल्लिषेणमलधारिदेवाय ॥　　　　(पूर्वपार्श्वे)

राजन्सर्वारिदर्पप्रविदलनपटुस्त्वं यथात्र प्रसिद्ध-

स्तद्वत्ख्यातोऽहमस्यां भुवि निखिलमदोत्पाटनः पण्डितानाम् ।

नो चेदेषोऽहमेते तव सदसि सदा सन्ति सन्तो महान्तो

वक्तुं यस्यास्ति शक्तिः स वदतु विदिताशेषशास्त्रो यदि स्यात् ॥

नाहंकारवशीकृतेन मनसा न द्वेषिणा केवलं

नैरात्म्यं प्रतिपद्य नश्यति जने कारुण्यबुद्ध्या मया ।

राज्ञः श्रीहिमशीतलस्य सदसि प्रायो विदग्धात्मनो
बौद्धौघान्सकलान्विजित्य सुगतः पादेन विस्फोटितः ॥

श्रीपुष्पषेणमुनिरेव पदं महिम्नो
देवः स यस्य समभूत्स भवान्सधर्मा।
श्रीविभ्रमस्य भवनं ननु पद्ममेव
पुष्पेषु मित्रमिह यस्य सहस्रधामा॥

**विमलचन्द्रमुनीन्द्रगुरोर्गुरुः** प्रशमिताखिलवादिमदं पदम्।
यदि यथावदवैष्यत पण्डितैर्ननु तदान्ववदिष्यत वाग्विभोः॥

चूर्णि(:) ॥

तथाहि। यस्यायमापादितपरवादिहृदयशोकः पत्रालम्बनश्लोकः॥

पत्रं शत्रुभयंकरोरु भवनद्वारे सदा संचर-
न्नानाराजकरीन्द्रवृन्दतुरगव्राताकुले स्थापितम्।
शैवान्पाशुपतांस्तथागतसुतान्कापालिकान्कापिला-
नुद्दिश्योद्धृतचेतसा विमलचन्द्राशाम्बरेणादरात्॥

दुरितग्रहनिग्रहाद्भयं यदि भो भूरिनरेन्द्रवन्दितम्।
ननु तेन हि भव्यदेहिनो भजत श्रीमुनि**मिन्द्रनन्दिनम्**॥

घटवादघटाकोटिकोविदं को विदां प्रवाक्।
**परवादिमल्लदेवो** देव एव न संशयः॥

चूर्णि(:) ॥

येनेयमात्मनामधेयनिरुक्तिरुक्ता नाम पृष्टवन्तं **कृष्णराजं** प्रति।

गृहीतपक्षादितरः परः स्यात्तद्वादिनस्ते परवादिनः स्युः।
तेषां हि मल्लः परवादिमल्लस्तन्नाम मन्नाम वदन्ति सन्तः॥

आचार्यवर्यो यतिरार्यदेवो राद्धान्तकर्ता ध्रियतां स मूर्ध्नि।
यः स्वर्गयानोत्सवसीम्नि कायोत्सर्गस्थितः कायमुदुत्ससर्ज॥

श्रवणकृततृणोऽसौ संयमं ज्ञातुकामैः
शयनविहितवेलासुप्तलुप्तावधानः।

श्रुतिमरभसवृत्त्योन्मृज्य पिञ्छेन शिश्ये
किल मृदुपरिवृत्त्या दत्ततत्कीटवर्त्मा ॥
विश्वं यः श्रुतबिन्दुनावरुरुधे भावं कुशाग्रीयया
बुद्ध्यैवातिमहीयसा प्रवचसा बद्धं गणाधीश्वरैः।
शिष्यान्प्रत्यनुकम्पया कृशमतीनैदंयुगीनान्सुगी-
स्तं वाचार्चत चन्द्रकीर्तिगणिनं चन्द्राभकीर्तिं बुधाः ॥
सद्धर्मकर्मप्रकृतिं प्रणामाद्यस्योग्रकर्मप्रकृतिप्रमोपः।
तं नाम्नि कर्मप्रकृतिं नमामो भट्टारकं दृष्टकृतान्तपारम् ॥
अपि स्ववाग्व्यस्तसमस्तविद्यस्त्रैविद्यशब्देऽप्यनुमन्यमानः।
श्रीपालदेवः प्रतिपालनीयः सतां यतस्तत्त्वविवेचनी धीः ॥
तीर्थं श्रीमतिसागरो गुरुरिलाचक्रं चकार स्फुर-
ज्ज्योतिःपीततमःपयःप्रविततिः पूतं प्रभूताशयः।
यस्माद्भूरिपरार्थ्यपावनगुणः श्रीवर्धमानोल्लस-
द्रत्नोत्पत्तिरिलातलाधिपशिरःशृङ्गारकारिण्यभूत् ॥
यत्राभियोक्तरि लघुर्लघुधामसोम-
सौम्याङ्गभृत्स च भवत्यपि भूतिभूमिः।
विद्याधनं जयपदं विशदं दधानो
विष्णुः स एव हि महामुनिहेमसेनः ॥

चूर्णि ॥ यस्यायमवनिपतिपरिषदि निग्रहमहीनिपातभीतदुस्थदुर्गर्वपर्वतारूढप्रतिवादिलोकः प्रतिज्ञाश्लोकः ॥

तर्के व्याकरणे कृतश्रमतया धीमत्तयाप्युद्धतो
मध्यस्थेषु मनीषिषु क्षितिभृतामग्रे मया स्पर्धया।
यः कश्चित्प्रतिवक्ति तस्य विदुषो वाग्मेयभङ्गं परं
कुर्वेऽवश्यमिति प्रतीहि नृपते हे हैमसेनं मतम् ॥
हितैषिणां यस्य नृणामुदात्तवाचा निबद्धा हितरूपसिद्धिः।
वन्द्यो दयापालमुनिः स वाचा सिद्धः सतां मूर्धनि यः प्रभावैः ॥

यस्य श्रीमतिसागरो गुरुरसौ चञ्चद्यशश्चन्द्रसूः
श्रीमान्यस्य स वादिराजगणभृत्सब्रह्मचारी विभोः।
एकोऽतीव कृती स एव हि दयापालव्रती यन्मन-
स्यास्तामन्यपरिग्रहग्रहकथा स्वे विग्रहे विग्रहः॥
त्रैलोक्यदीपिका वाणी द्वाभ्यामेवोदगादिह।
जिनराजत एकस्मादेकस्माद्वादिराजतः॥
आरुह्याम्बरमिन्दुबिम्बरचितौत्सुक्यं सदा यद्यश-
श्छत्रं वाक्चमरीजराजिरुचयोऽभ्यर्णं च यत्कर्णयोः।
सेव्यः सिंहसमर्च्यपीठविभवः सर्वप्रवादिप्रजा-
दत्तोच्चैर्जयकारसारमहिमा श्रीवादिराजो विदाम्॥
चूर्णि॥ यदीयगुणगोचरोऽयं वचनविलासप्रसरः कवीनाम्।
नमोऽर्हते॥ (दक्षिणपार्श्वे)
श्रीमच्चालुक्यचक्रेश्वरजयकटके वाग्वधूजन्मभूमौ
निष्काडं डिण्डिमः पर्यटति पटुरटो(वो) वादिराजस्य जिष्णोः।
जह्युद्द्वाददर्पो जहिहि गमकतागर्वभूमा जहाहि
व्याहारेर्ष्यो जहीहि स्फुटमृदुमधुरश्राव्यकाव्यावलेपः॥
पाताले व्यालराजो वसति सुविदितं यस्य जिह्वासहस्रं
निर्गन्ता स्वर्गतोऽसौ न भवति धिषणो वज्रभृद्यस्य शिष्यः।
जीवेतां तावदेतौ निलयबलवशाद्वादिनः केऽत्र नान्ये
गर्वं निर्मुच्य सर्वं जयिनमिनसभे वादिराजं नमन्ति॥
वाग्देवीं सुचिरप्रयोगसुदृढप्रेमाणमप्यादरा-
दादत्ते मम पार्श्वतोऽयमधुना श्रीवादिराजो मुनिः।
भो भोः पश्यत पश्यतैष यमिनां किं धर्म इत्युच्चकै-
रब्रह्मण्यपराः पुरातनमुनेर्वाग्वृत्तयः पान्तु वः॥
गङ्गावनीश्वरशिरोमणिबन्धसंध्या-
रागोल्लसच्चरणचारुनखेन्दुलक्ष्मीः।
श्रीशब्दपूर्वविजयान्तविनूतनामा[1]
धीमानमानुषगुणोऽस्ततमः प्रमांशुः॥

१. श्रीविजय इति तात्पर्यम्.

चूर्णि ॥ स्तुतो हि स भवानेष श्रीवादिराजदेवेन ॥

यद्विद्यातपसोः प्रशस्तमुभयं श्रीहेमसेने मुनौ
प्रागासीत्सुचिराभियोगबलतो नीतं परामुन्नतिम्।
प्रायः श्रीविजये तदेतदखिलं तद्वीथिकायां स्थिते
संक्रान्तं कथमन्यथानतिचिरादीदृग्विधेदृक्तपः ॥

विद्योदयोऽस्ति न मदोऽस्ति तपोऽस्ति भास्व-
न्नोग्रत्वमस्ति विभुतास्ति न चास्ति मानः।
यस्याश्रये कमलभद्रमुनीश्वरं तं
यः ख्यातिमापदिह शाम्यदघैर्गुणौघैः ॥

स्मरणमात्रपवित्रतमं मनो भवति यस्य सतामिह तीर्थिनाम्।
तमतिनिर्मलमात्मविशुद्धये कमलभद्रसरोवरमाश्रये ॥

सर्वाङ्गैर्यमिहालिलिङ्ग सुमहाभागं कला भारती
भास्वन्तं गुणरत्नभूषणगणैरप्यग्रिमं योगिनाम्।
तं सन्तः स्तुवतामलंकृतदयापालाभिधानं महा-
सूरिं भूरिधियोऽत्र पण्डितपदं यत्रैव युक्तं स्मृताः(तम्) ॥

विजितमदनदर्पः श्रीदयापालदेवो
विदितसकलशास्त्रो निर्जिताशेषवादी।
विमलतरयशोभिर्व्याप्तदिक्चक्रवालो
जयति नतमहीभृन्मौलिरत्नारुणाङ्घ्रिः ॥

यस्योपास्य पवित्रपादकमलद्वन्द्वं नृपः पोय्सलो
लक्ष्मीं सन्निधिमानयत्स विनयादित्यः कृताज्ञाभुवः।
कस्तस्यार्हति शान्तिदेवयमिनः सामर्थ्यमित्थं तथे-
त्याख्यातुं विरलाः कलौ स्फुरदुरुज्योतिर्दशास्तादृशाः ॥

स्वामीति पाण्ड्यपृथिवीपतिना निसृष्ट-
नामाप्तदृष्टिविभवेन निजप्रसादात्।
धन्यः स एव मुनिराहवमल्लभूभु-
गास्थानिकप्रथितशब्दचतुर्मुखाख्यः ॥

श्रीमुल्लूरविदूरसारवसुधारत्नं सनाथो गुणे
नाक्षूणीनमहीक्षितामुरुमहःपिण्डः शिरोमण्डनः।
आराध्यो **गुणसेनपण्डितपतिः** स स्वास्थ्यकामैर्जना
यद्युक्तागमगन्धतोऽपि गलितग्लानिं गतिं लम्बि(म्भि)ताः॥
वन्दे वन्दितमादरादहरहः स्याद्वादविद्याविदां
स्वान्तध्वान्तवितानधूननविधौ भास्वन्तमन्यं भुवि।
भक्तोत्पादितसेवमानतिकृतां यत्संनियोगान्मनः-
पद्मं सद्म भवेद्विकासविभवस्योनु(न्मु)क्तनिद्राभरम्।
मिथ्याभाषणभूषणं परिहरेतौद्धत्य·········चत
स्याद्वादं वदता नमेत विनयाद्वादीभकण्ठीरवम्।
नो चेत्तद्गुणनिर्जितश्रुतिभयभ्रान्ताः स्थ यूयं यत-
स्तूर्णं निग्रहजीर्णकूपकुहरे वादिद्विपा पातिनः॥
गुणाः कुन्दस्पन्दोड्डमरसमरा वागमृत वाः-
प्लवप्रायप्रेयःप्रसरसरसा कीर्तिरिव सा।
नखेन्दुज्योत्स्नाङ्घ्रिर्नृपचयचकोरप्रणयिनी
न कासां श्लाघानां पदमजितसेनव्रतिपतिः(तेः)॥
सकलभुवनपालानम्रमूर्धावबद्ध-
स्फुरितमकुटचूडालीढपादारविन्दः।
मदवदखिलवादीभेन्द्रकुम्भप्रभेदी
गणभृदजितसेनो भाति वादीभसिंहः॥
चूर्णि॥ यस्य संसारवैराग्यवैभवमेवंविधाः स्ववाचः सूचयन्ति॥
प्राप्तं श्रीजिनशासनं त्रिभुवने यद्दुर्लभं प्राणिनां
यत्संसारसमुद्रमग्नजनता हस्तावलम्बायितम्।
यत्प्राप्ताः परनिर्व्यपेक्षसकलज्ञानश्रियालंकृता-
स्तस्मात्किं गहनं कुतो भयवशः का वात्र देहे रतिः॥
आत्मैश्वर्यं विदितमधुनानन्तबोधादिरूपं
तत्संप्राप्त्यै तदनु समयं वर्ततेऽत्रैव चेतः।

त्यक्त्वान्यस्मिन्सुरपतिसुखे चक्रिसौख्ये च तृष्णां
तत्तुच्छार्थैरलमलमधीलोचनैर्लोकवृत्तैः ॥
अजानन्नात्मानं सकलविषयज्ञानवपुषं
सदा शान्तं स्वान्तःकरणमपि तत्साधनतया ।
वृथा रागद्वेषैः कलुषितमनाः कोऽपि यततां
कथं जानन्नेनं क्षणमपि ततोऽन्यत्र यतते ॥

(पश्चिमपार्श्वे) चूर्णि ॥ यस्य च शिष्ययोः कविताकान्त-वादिकोलाहलापरनामधेययोः शान्तिनाथ-पद्मनाभपण्डितयोरखण्डपाण्डित्यगुणोपवर्णनमिदमसंपूर्णम् ॥

त्वामासाद्य महाधियं परिगता या विश्वविद्वज्जन-
ज्येष्ठाराध्यगुणा चिरेण सरसा वैदग्ध्यसंपद्गिरा(म्) ।
कृत्स्नाशान्तनिरन्तरोदितयशःश्रीकान्त शान्ते न तां
वक्तुं सापि सरस्वती प्रभवति ब्रूमः कथं तद्वयम् ॥
व्यावृत्तभूरिमदसंततिविस्मृतेर्ष्या-
पारुष्यमाप्तकरुणारुतिकान्दिशीकम् ।
धावन्ति हन्त परवादिगजास्त्रसन्तः
श्रीपद्मनाभबुधगन्धगजस्य गन्धात् ॥
दीक्षा च शिक्षा च यतो यतीनां जैनं तपस्तापहरं दधानात् ।
कुमारसेनोऽवतु यच्चरित्रं श्रेयःपथोदाहरणं पवित्रम् ॥
जगद्वरिमघस्मरस्मरमदान्धगन्धद्विप-
द्विधाकरणकेसरी चरणभूष्यभूभृच्छिखः ।
द्विषद्गुणवपुस्तपश्चरणचण्डधामोदयो
दयेत मम मल्लिषेणमलधारिदेवो गुरुः ॥
वन्दे तं मलधारिणं मुनिपतिं मोहद्विपद्व्याहति-
व्यापारव्यवसायसारहृदयं सत्संयमोरुश्रियम् ।
यत्कायोपचयीभवन्मलमपि प्रव्यक्तभक्तिक्रमा-
नम्राकम्रमनोमिलन्मलमषीप्रक्षालनैकक्षमम् ॥

अतुच्छतिमिरच्छटाजटिलजन्मजीर्णाटवी-
दवानलतुलाजुषां पृथुतपःप्रभावत्विषाम्।
पदं पदपयोरुहभ्रमितभव्यभृङ्गावलि-
र्ममोल्लसतु मल्लिषेणमुनिराण्मनोमन्दिरे॥
नैर्मल्याय मलाविलाङ्गमखिलत्रैलोक्यराज्यश्रिये
नैष्किंचन्यमतुच्छतापहृतये न्यञ्चद्भुताशं तपः।
यस्यासौ गुणरत्नरोहणगिरिः श्रीमल्लिषेणो गुरु-
र्वन्द्यो येन विचित्रचारुचरितैर्धात्री पवित्रीकृता॥
यस्मिन्नप्रमिता क्षमाभिरमते यस्मिन्दयानिर्दया-
श्लेषो यत्र समत्वधीः प्रणयिनी यत्रास्पृहा सस्पृहा।
कामं निर्वृतिकामुकः स्वयमधोऽप्यग्रेसरो योगिना-
माश्चर्याय कथं न नाम चरितैः श्रीमल्लिषेणो मुनिः॥
यः पूज्यः पृथिवीतले यमनिशं सन्तः स्तुवन्त्यादरा-
द्येनानङ्गधनुर्जितं मुनिजना यस्मै नमस्कुर्वते।
यस्मादागमनिर्णयोऽयमभवद्यस्यास्ति जीवे दया
यस्मिञ्श्रीमलधारिणि व्रतिपतौ धर्मोऽस्ति तस्मै नमः॥
धवलसरसतीर्थे[1] सैष सन्न्यासधन्यां
परिणतिमनुतिष्ठन्नन्दिमानिष्ठितात्मा।
व्यसृजत निजमङ्गं भङ्गमङ्गोद्भवस्य
ग्रथितुमिव समूलं भावयन्भावनाभिः॥

चूर्णि ॥ तेन श्रीमदजितसेनपण्डितदेवदिव्यश्रीपादकमलमधुकरीभूतभावेन महानुभावेन जैनागमप्रसिद्धसल्लेखनाविधिविसृज्यमानदेहेन समाधिविधिविलोकनोचितकरणकुतूहलमिलितसकलसंघसंतोषनिमित्तमात्मान्तःकरणपरिणतिप्रकाशनाय निरवद्यं पद्यमिदमाशु विरचितम्॥

आराध्य रत्नत्रयमागमोक्तं विधाय निःशल्यमशेषजन्तोः।
क्षमां च कृत्वा जिनपादमूले देहं परित्यज्य दिवं विशामः॥

---

१. अधुना 'बेल्गोला'नाम्ना प्रसिद्धे.

शाके शून्यशराम्बरावनि(१०५०)मिते संवत्सरे कीलके
मासे फाल्गुनिके तृतीयदिवसे वारेऽसिते भास्करे।
स्वातौ श्वेतसरोवरे सुरपुरं यातो यतीनां पति-
र्मध्याह्ने दिवसत्रयानशनतः श्रीमल्लिषेणो मुनिः॥
श्रीमन्मलधारिदेवर गुड्डं विरुदलेखक मदन महेश्वरं मल्लिनाथं वरेदं
विरुदरूवारिमुखतिलकं गङ्गाचारिकण्डरिषिदम्॥

(बृ. लू. राइस् पण्डितमुद्रिते 'इन्स्क्रिप्शन्स् ऐट् श्रवणबेल्-
गोला'नामकपुस्तके चतुष्पञ्चाशो लेखः।)

---

## (३९)

## यादववंशोद्भूतकृष्ण(कह्नर)महीपालामात्यमल्लिसेट्टि-दानपत्रम्।

ॐ नमः शिवाय॥ श्रीगणाधिपतये नमः॥
पायादाद्यः स वः पोत्री यद्दंष्ट्राप्रतिबिम्बिता।
अगादिव धृता धात्री हर्षाद्द्विगुणपुष्टताम्॥
अस्ति स्वस्त्ययनो राजा **सिंहणो** यदुवंशजः।
यस्य कीर्तिस्त्रिभुवने प्रथिता हरिकीर्तिवत्॥
प्रत्यर्थिक्षितिपालमौलिमुकुटप्रत्युप्तमुक्ताफल-
प्रान्तप्रोल्लसदङ्घ्रिवारिजयुगः श्रीसिंहणः क्षोणिपः।
आशाविश्रुतशुद्धयादवकुलस्रष्टोऽवति क्ष्मातलं
पारावारसुमेखलं सुतवरः शूरोऽजयज्जैतुगिः॥
यो राजा जैतुगिर्नाम सिंहणाख्यान्नृपात्ततः।
जनितो यदुवंशाब्धौ पयोधाविव चन्द्रमाः॥
तस्य पुत्रो महातेजाः **श्रीकह्नर** इति श्रुतः।
यदाज्ञां शिरसा धृत्वा भवन्ति सुखिनो नृपाः॥
जयति जगति राजा सर्वभूपालमौलि-
प्र(ग्र)थितपरमरत्नप्रोल्लसत्पादपद्मः।

यदुकुलचिरलीले वासुदेवे जनाना
नयनकमलसूर्यः प्रीतिमान्कह्वराख्यः ॥
यद्वक्षसि स्थिता लक्ष्मीर्यद्भुजे विजयाङ्गना।
यद्दृष्टौ करुणा नित्यं ददामीति वचस्यपि ॥
यद्यात्रायां नृपाः सर्वे तत्र तत्र स्थिता दिशि।
बालैरन्तःपुरैर्भीत्या क्षेपयन्त्यञ्जसा बलिम् ॥
तस्यान्यक्षितिपालमौलिमुकुटप्रत्युप्तरत्नैश्चिरं
नीराजच्चरणारविन्दयुगलः शेषस्य पृथ्वीपतेः।
शूरोऽमात्यधुरि स्थितो विजयते बीचाग्रजः संततं
मल्लाख्यः किल चिक्कदेवतनयः प्रख्यातकीर्तिर्भुवि ॥
तस्यात्मजो महामात्यश्चौण्डिसेट्टिर्महायशाः।
यो जिह्वा पृथिवीशस्य यो राज्ञो दक्षिणो भुजः ॥
यश्चौण्डिसेट्टिः प्रथितप्रतापः सर्वासु दिक्षूर्जितपुण्यकीर्तिः।
श्रीसोमनाथाङ्घ्रियुगात्म(ब्ज)नत्या प्रवर्धिताशेषविभूतिरम्यः ॥
दिशो जिगीषं(षुं) तमवेक्ष्य सर्वे द्विषन्त एवं त्वथ चौण्डिसेट्टिम्।
वल्मीकमारुह्य तृणं चरन्ति गृह्णन्ति नीवीमपि कर्णपत्रम् ॥
यद्रूपसौन्दर्यगुणप्रलुब्धा रतिः समासाद्य पुनः पतिं सा।
विस्मृत्य चानङ्गसुखं प्रवृद्धसुखेन विक्रीडति लब्धहर्षा ॥
प्रशास्त्यरीन्यः प्रगृहीतचापो ददाति चार्थान्कृपया द्विजेभ्यः।
चवुण्डसेट्टाख्यबुधाय दद्यात्तस्मै चिरायुर्भुवि सोमनाथः ॥ ७ ॥

स्वस्तिश्रीशकसंवत्सरस्य शताधिकसहस्रैकाधिकसप्तत्या(११७०)श्चानन्तरे सौम्येऽब्दे श्रावणे मासि सितपक्षे द्वादश्यां गुरुवारे श्रीकह्वरदेवस्य महाराजस्य बीचाग्रजो मल्लिसेट्टाख्यो महामात्यः कटकयात्रायां भीमरथ्यां पौण्डरीकक्षेत्रे श्रीविष्णुसंनिधौ वेणुग्रामदेशस्थां ताम्ब्रपुरीं दशाधिकशतवृत्तीः प्रकल्पाष्टभोगसमस्ततेजःसहितां सर्वनमस्यां प्रसिद्धचतुःसीमामुद्रितां श्रीकह्वरदेवस्य राज्ञो राज्याभ्युदयार्थं नानागोत्रेभ्यो ब्राह्मणेभ्यः सदक्षिणं धारापूर्वकं प्रदत्तवान्। तस्य पुत्रो महामात्यश्चौण्डिसेट्टिः राज्ञः समीपं

गत्वा पितुः सर्वाधिपत्यं राज्ञो लब्ध्वा वेणुग्रामदेशस्था ताम्रपुरी मम पित्रा ब्राह्मणेभ्यो दत्तेति तस्य राज्ञो निवेदयित्वा तेन राज्ञा मयैव दत्तेति लब्धाभ्यनुज्ञस्तेभ्यो ब्राह्मणेभ्योऽष्टभोगतेजःसमन्वितं सर्वनमस्यं ताम्रशासनं चौण्डिसेट्टिर्दापयित्वा पितुर्धर्ममाचन्द्रार्कं सुस्थिरं कृतवान् ॥ छ ॥ तस्मै सर्वतः स्वस्त्यस्तु ॥ छ ॥ ततस्तस्यास्ताम्रपुर्याः प्रतिगृहितॄणां ब्राह्मणानां गोत्रगुणनामानि क्रमेण लिख्यन्ते ॥ छ ॥ स्वस्ति ॥ छ ॥ वसिष्ठगोत्रीयलक्ष्मीधरभट्टोपाध्यायसुतनारायणभट्टोपाध्यायः । तस्य पुत्रः लक्ष्मीधरक्रमितः । वसिष्ठगोत्रीयवामनक्रमितसुतनारायणभट्टोपाध्यायः । आत्रेयगोत्रीयऋगर्थद दुग्गणभट्टोपाध्यायसुतकृष्णभट्टोपाध्यायः । तस्य पुत्रः दुग्गणभट्टोपाध्यायः । काश्यपगोत्रीयकावदेवपट्टवर्धनसुतरामेश्वरपट्टवर्धनः । अगस्त्यगोत्रीयाचार्यकेशवभट्टोपाध्यायसुतदशग्रन्थिमाधवभट्टोपाध्यायः । तस्य भ्राता वेदार्थनार(राय)णभट्टोपाध्यायः । आत्रेयगोत्रीयब्रह्मदेवपट्टवर्धनसुतनारायणपट्टवर्धनः । तस्य भ्राता श्रीधरपट्टवर्धनः । जामदग्न्यवत्सगोत्रीयजक्कदेवभट्टोपाध्यायसुतश्रीधरभट्टोपाध्यायः । काश्यपगोत्रीयश्रीधरभट्टोपाध्यायसुतश्रीभागवतकलिदेवभट्टोपाध्यायः । आत्रेयगोत्रीयनारायणक्रमितसुताध्वरिवसवणभट्टोपाध्यायः । भारद्वाजगोत्रीयनारद(?)सुतकामदेवघैसः । वासिष्ठगोत्रीयभास्करसुतरामदेवघैसः । भारद्वाजगोत्रीयब्रह्मदेवक्रमितसुतसोमेश्वरक्रमितः । काश्यपगोत्रीयलक्ष्मीधरभट्टोपाध्यायसुतसोमेश्वरभट्टोपाध्यायः । भारद्वाजगोत्रीयवामदेवपट्टवर्धनसुतविष्णुपट्टवर्धनः । भारद्वाजगोत्रीयमेधाविघलिसाससुतगोपालपट्टवर्धनः । तस्य भ्राता उत्तमक्रमितः । तस्य सुतः विश्वनाथघलिसासः । वासिष्ठगोत्रीयदेवणपट्टवर्धनसुतशंकराचार्यः । तस्य सुतः चौडरायपट्टवर्धनः । वासिष्ठगोत्रीयजैतकह्नरपाठकसुतरवलदेवपाठकः । तस्य भ्राता केशव पाठकः । भार्गवगोत्रीयदामोदरद्वे(द्विवे)दिसुतशिवहरिपाठकः । तस्य भ्राता सर्वेश्वरद्वे(द्विवे)दी । वासिष्ठगोत्रीयःदेव दुवे(द्विवेदि)सुतलक्ष्मीधरपाठकः । पाराशरगोत्रीयशान्तिशुक्लसुतगजा(दा)धरपाठकः । वत्सगोत्रीयदेवशर्मशुक्लसुतनरसिंहपाठकः । भार्गवगोत्रीयकीर्तिवासपाठकसुतनागदेवपाठकः । गर्गगोत्रीयदेवशर्मपाठकसुताश्वधरपाठकः ।

आर्ष्टिकगोत्रीयामदेवोपाध्यायसुतदामोदरोपाध्यायः। तस्य भ्राता आशोपाध्यायः। कापिष्ठलगोत्रीयचांगदेवपाठकसुतदामोदरपाठकः। देवरातगोत्रीयसारङ्गदीक्षितसुतवासूपाध्यायः। वत्सगोत्रीयमहेश्वरपाठकसुतमहेशर्मपाठकः। गार्ग्यगोत्रीयवाकुपाठकसुतसोढणपाठकः। भारद्वाजगोत्रीयात्रिदेवपण्डितसुतवैजनाथपण्डितः। कौशिकगोत्रीयप्रभाकरत्रिवाडि(पाठि)सुतदामोदरत्रिवाडिः। कौण्डिन्यगोत्रवाकुद्वे(द्विवे)दिसुतजगद्धरद्वे(द्विवे)दिः। कौशिकगोत्रीयमदनाइतपाठकसुतरामदेवपाठकः। भारद्वाजगोत्रीयत्रिलोचनसुतविजयशर्मपाठकः। तस्य भ्राता क्षेमधरपाठकः। शाण्डिल्यगोत्रीयहरिहरत्रिवाडिसुतमहशर्मत्रिवाडिः। कौशिकगोत्रीयउत्तमपण्डितसुतखेयिदेवपण्डितः। गरगगोत्रीयअसधरपाठकसुतसावलपाठकः। मौदुग(द्ग)ल्यगोत्रीयनारायणोपाध्यायसुतबसवणोपाध्यायः। भारद्वाजगोत्रीयगनगनूरमैलारस्वामिगलसुतईश्वरस्वामिः(मी)। विश्वामित्रगोत्रीयसर्वज्ञसरस्वतीभण्डारडदेवणभट्टोपाध्यायसुतसर्वज्ञवैजनाथभट्टोपाध्यायः। आत्रेयगोत्रीयनागदेवसुतवोपदेवोपाध्यायः। काश्यपगोत्रीयतेजोपाध्यायसुतलक्ष्मीधरोपाध्यायः। गर्गगोत्रीयब्रह्मदेवपट्टवर्धनसुतसोमनाथपट्टवर्धनः। तस्य भ्राता त्रिविक्रमभट्टोपाध्यायः। भारद्वाजगोत्रीयमलिदेवपट्टवर्धनसुतभास्करभट्टोपाध्यायः। तस्य भ्राता कलिदेवपट्टवर्धनः। विष्णुवृद्धगोत्रीयतन्त्रमन्त्राचार्यवामदेवभट्टोपाध्यायसुतनरसिंहभट्टोपाध्यायः। विश्वामित्रगोत्रीयसोमेश्वरपट्टवर्धनसुतशंकरघलिसः। विष्णुवृद्धगोत्रीयश्रीधरपट्टवर्धनसुतमाधवपट्टवर्धनः। कपिगोत्रीयमाधवपट्टवर्धनसुतश्रीधरपट्टवर्धनः। काश्यपगोत्रीयकलिदेवघलिससुतविष्णुपट्टवर्धनः। काश्यपगोत्रीयकेशवपट्टवर्धनसुतस्वामिदेवघलिसासः। काश्यपगोत्रीयनारणभट्टनसुतदेवणघलिसः। भारद्वाजगोत्रीयमहादेवपट्टवर्धनसुतमलिदेवघैसासः। तस्य भ्राता देवणघैसासः। भारद्वाजगोत्रीयरामदेवघैसाससुतविष्णुघैसासः। वासिष्ठगोत्रीयादित्यभट्टोपाध्यायसुतवारणाशियविष्णुभट्टोपाध्यायः। पाराशरगोत्रीयवारणाशियनारायणभट्टोपाध्यायसुतविश्वनाथक्रमितः। आत्रेयगोत्रीयसरस्वतीपद्मनाभभट्टोपाध्यायः। काश्यपगोत्रीयद्रविडविश्वनाथभट्टोपाध्यायः। कपिगोत्रीयदामोदरभट्टो-

पाध्यायसुतरवलदेवभट्टोपाध्यायः । काश्यपगोत्रीयमाधवपट्टवर्धनसुतमञ्चयणोपाध्यायः । विश्वामित्रगोत्रीयब्रह्मज्ञानिगलब्रह्मदेवभट्टोपाध्यायसुतानन्तभट्टोपाध्यायः । हरितगोत्रीयगोविन्दपट्टवर्धनसुतवामनपट्टवर्धनः । हरितगोत्रीयवामनपट्टवर्धनसुतगोविन्दपट्टवर्धनः । तस्य भ्राता वासुदेवपट्टवर्धनः । भारद्वाजगोत्रीयचन्द्रभट्टोपाध्यायसुतप्रोलिभट्टोपाध्यायः । भारद्वाजगोत्रीयवासुदेवभट्टोपाध्यायसुतमहादेवपट्टवर्धनः । भारद्वाजगोत्रीयश्रीधरसुतईश्वरवलिसः । श्रीवत्सगोत्रीयमायिदेवघलिसासुतगोविन्दघलिसासः । श्रीवत्सगोत्रीयदिवाकरघलिसासुतनागदेवघलिसासः । वासिष्ठगोत्रीयवलिदेवघसुतमलिदेवपट्टवर्धनः । मौनभार्गवगोत्रीयनारायणघलिससुतत्रसवणघलिसासः । भारद्वाजगोत्रीयवेदार्थदरेच्यपणसुतमैलारभट्टोपाध्यायः । गौतमगोत्रीयलक्ष्मीधरसुतविष्णुभट्टोपाध्यायः । भारद्वाजगोत्रीयप्रसन्नसरस्वतीश्रीधरभट्टोपाध्यायसुतवासुदेवभट्टोपाध्यायः । आत्रेयगोत्रीयविष्णुभट्टोपाध्यायसुतसामवेदीहरिहरभट्टोपाध्यायः । मौनभार्गवगोत्रीयभास्करभट्टोपाध्यायसुतविष्णुपट्टवर्धनः । भारद्वाजगोत्रीयकेशवभट्टोपाध्यायसुतहिमदकलिदेवपट्टवर्धनः । भारद्वाजगोत्रीयनरसिंहपट्टवर्धनसुतमाधवपट्टवर्धनः । भारद्वाजगोत्रीयनागदेवपट्टवर्धनसुतसरस्वतीनागदेवपट्टवर्धनः । काश्यपगोत्रीयविष्णुभट्टोपाध्यायसुतमलिदेवभट्टोपाध्यायः । आत्रेयगोत्रकेशवपट्टवर्धनस्य भ्राता मधुसूदनपट्टवर्धनः । आत्रेयगोत्रवरदेवसुतप्रौढसरस्वतीनां वृत्तिद्वयम् । काश्यपगोत्रविष्णुदेव(ः) । वामनभट्टोपाध्यायः । काश्यपगोत्रनागदेव(नागदेव)भट्टोपाध्यायः । काश्यपगोत्रीयबोनकममञ्चयणभट्टोपाध्यायः । वासिष्ठगोत्रीयसामवेदिचद्यणभट्टोपाध्यायः । काश्यपगोत्रीयस्वयंपाकिविश्वनाथभट्टोपाध्यायः । काश्यपगोत्रीयगोकागेयवेदार्थदनागदेवभट्टोपाध्यायः । मौनभार्गवगोत्रीयमेधाविघैससुतउत्तमक्रमितः । काश्यपगोत्रीयअण्णिगेरेयविष्णुपट्टवर्धन(ः) । भारद्वाजगोत्रीयरिह्वशुक्लसुतश्रीविप्रदासपद्मनाभशर्मोपाध्यायः तस्य वृत्तिचतुष्टयम् । आत्रेयगोत्रसामवेदिहरिहरभट्टोपाध्यायः ॥ ७ ॥

भूमिं यः प्रतिगृह्णाति यश्च दानं प्रयच्छति ।
तावुभौ पुण्यकर्माणौ नियतौ(तं) स्वर्गगामिनौ ॥
अपि हस्तमितां भूमिं यो विप्राय प्रयच्छति ।
षष्टिं वर्षसहस्राणि स्वर्गे लोके महीयते ॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिं वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
गामेकां रत्निकामेकां भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदा भूतसंप्लवम् ॥
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो महद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ॥
यो देवपूजाप्रगृहीतचित्तो यो वैरिपक्षेषु गृहीतखड्गः ।
यो ब्राह्मणेष्वर्पितवित्तराशिः स चौण्डिसेट्टिर्भवताच्चिरायुः ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
श्रीमच्चौण्डीश्वरकृतधर्मोऽयं सर्वधर्मतोऽभ्यधिकः ।
कल्पस्थायी भूयाद्भूयादप्येष दीर्घायुः ॥ ७ ॥
श्रीसोमनाथश्रीपादपद्माराधकः श्रीचौण्डिसेट्टिः ॥ ७ ॥

लेखकः ज्योतिषवसवणोपाध्यायः ॥ ७ ॥ श्री ॥ स्वस्तिश्री ॥ मङ्गलं महाश्री ॥ ७ ॥ श्री ॥ ७ ॥

काश्यपगोत्रमङ्गलपण्डितसुतगोपालपण्डितो महाराजनङ्गलिगेनडहं वावेद्यवृत्ति ड ॥ ७ ॥ श्रीः ॥ ७ ॥ भारद्वाजगोत्रीयहिमडनागदेवपद्दवर्धनः । भारद्वाजगोत्रीयविप्रदासपद्मनाभभट्टोपाध्यायसुतसोमनाथदेवस्य वृत्तिद्वयम् ॥ ७ ॥ श्री ॥

(इण्डियन् आण्टिक्वेरी १४।६८–७५)

---

( ४० )

## नेपालमहीपालसिद्धिनृसिंहमल्लस्य प्रशस्तिः।

ॐ नमो गोपालाय॥

ब्रह्मत्वे सृजते विश्वं स्थितौ पालयते हरे।
रुद्ररूपाय कल्पान्ते नमस्तुभ्यं त्रिमूर्तये॥
प्रावीण्यप्रथितः प्रतापमथितप्रत्यर्थिपृथ्वीपति-
प्रोद्दामप्रमदौघलोचनपयःप्रारब्धवारांनिधिः।
जातः श्रीहरिसिंहदेवनृपतिर्दीतावदातान्वये
संप्राप्तः पृथुना नृपेण समतां यो वृत्तिदाता सताम्॥
यस्यान्ववायजलधावुदियाय राज-
चन्द्रो महेन्द्र इव तत्र महेन्द्रमल्लः।
येनार्थिकल्पतरुणा गुणसागरेण
राजन्वती वसुमती महती बभूव॥
यत्प्रौढप्रभवत्प्रतापपतिताः प्राकम्पिताः शत्रवो
भेजुः शैलदरीं विहाय नगरीं त्यक्त्वा पुरे सुन्दरीम्।
यस्याचारविचारपौरुषरवव्यग्राः समग्रा गिर-
स्तस्य क्षोणिपतेः प्रसिद्धमहसः केनोपमेयं यशः॥
अस्यात्मजोऽजनि महीतलकल्पवृक्षो
राजा विराजितयशाः शिवसिंहदेवः।
भूमीभुजा समरसीम्नि महाभुजेन
क्षेमं क्षणेन रिपवो बहवो विनष्टाः॥
येन क्षोणिभुजा प्रयाणसमये पादातसैन्योच्छल-
द्धूलीजालसमुत्थितेन मनसा व्योमान्धकारीकृतम्।
कूर्मो मर्मणि चूर्णितोऽपि नितरां धत्ते कथंचिद्धरां
शेषः शेषदशां जगाम सहसा सर्वंसहा निःसहा॥

तनयोऽस्य विनयपूर्णो बभूव कर्णोपमो भूमौ ।
हरिहरसिंहनरेन्द्रो वसुधाचन्द्रो बभूवासौ ॥
अरीणां निहन्ता यशःपारगन्ता सुशीलः समन्ताज्जयन्ताधिकश्रीः ।
स्वतातानुरूपोऽतितेजःसुरूपो बभूवावनीमण्डले चण्डरोचिः ॥
इन्द्राणीव सुरेश्वरस्य दयिता पद्मेव पद्मापते-
र्वैदेहीव रघूत्तमस्य गृहिणी गौरीव गौरीपतेः ।
तस्य क्षोणिपतेर्बभूव महिषी भव्या भवानीसमा
राज्ञी लालमती सती गुणवती प्रायो रतिर्भारती ॥
पौरंदरी दिगिव नूतनभानुबिम्बं
सौन्दर्यकाननगजाननमम्बिकेव ।
पुत्रं पवित्रमथ सिद्धिनृसिंहमल्लं
सा राजपुत्रतनया जनयांबभूव ॥
येनाकारि विपक्षपक्ष्मलदृशां दृग्वारिभिर्वारिधि-
र्येनाधारि जगत्त्रयोपरि शरच्चन्द्रावदातं यशः ।
बाल्योपक्रम एव विक्रमवतस्तस्याधुना पौरुषे
श्रीमत्सिद्धिनृसिंहमल्लनृपतेर्युद्धे समर्थो हि कः ॥
यद्भूमीपालगङ्गाजलविमलयशःपूरकर्पूरपूरै-
र्ब्रह्माण्डे पाण्डुरेऽस्मिन्समजनि रजनीनायको निष्कलङ्कः ।
तत्किं भूसेवकोऽभून्मुखमलमिषादेष यस्मामृतांशुः
सोऽयं दीर्घायुरास्तामधिधरणि मणिः सिद्धिपूर्वो नृसिंहः ॥
दानाल्पीकृतकल्पवृक्षगरिमा सीमा च तेजस्विनां
श्रीमानद्भुतकीर्तियुक्तमहिमा भीमानुजः साहसे ।
दोर्दण्डद्वयचण्डिमान्तगलितप्रत्यर्थिपृथ्वीपतिः
श्रीमत्सिद्धिनृसिंहमल्लनृपतिर्वर्वर्ति सर्वोपरि ॥
प्रातिष्ठ्यं च युधिष्ठिराधिकतरं निष्ठा वसिष्ठाधिका
कीर्तिः कार्तिककृत्तिकापतिमति(?)स्तस्याधिका वर्तते ।

वाणी व्याससमा रमा स्थिरतमा रामाभिरामाकृतिः
　श्रीमत्सिद्धिनृसिंहमल्लनृपतेः किं नाम यन्नाद्भुतम् ॥
कदाचिदेतेन महोन्नतेन मठः कृतः कोऽपि धनैरनेकैः ।
श्रीबालगोपालविरामभूमिर्विकुर्वतामत्यधरा जगत्याम् ॥
　यो मेरुमन्दरमहेन्द्रहिमाद्रिविन्ध्य-
　　कैलासशैलशिखरभ्रममातनोति ।
　किं चास्य हेमकलशानवलोक्य देवैः
　　संदिह्यते कनकधामनि पर्वतेन्द्रे ॥
हर्षान्नेपालवर्षे स्वरशरतुरगैरङ्किते (७५७) फाल्गुनीये
　पक्षे प्राप्ते वलक्षेऽमरगुरुदिवसे शंकरर्क्षे दशम्याम् ।
चक्रे जाम्बूनदीयैर्गुरुतरकलशैर्भास्वरैरेकविंशै-
　र्नेपालक्षोणिपालः प्रथितभुजबलो भूषणं तन्मठस्य ॥
युद्धारम्भः कृतोऽस्मिन्नपि शुभदिवसे शत्रुभिर्युद्धशौण्डै-
　र्दुष्टैः कोटोऽवरुद्धः कुटिलनृपभटैरद्भुतैः कोटिसंख्यैः ।
लीलामात्रेण शत्रूनपयनयत(?)तदा पार्थिवः पार्थतुल्यः
　कोटं निर्मोचयित्वा नमुचिरिपुरिवानन्दसंदोहमाप ॥
राजसूय इवारब्धो मध्यस्थेन महीभुजा ।
विशिष्य शेषनागोऽपि न शक्तो यस्य वर्णने ॥
आचार्यो यत्र मर्यादाधैर्यौदार्यदयानिधिः ।
विश्वनाथ उपाध्यायो विश्वनाथ इवाभवत् ॥
　यो मेरुभूधर इवातिगुरुर्गरिम्णा
　　योऽसौ महार्णव इवातिमहान्महिम्ना ।
　यो व्यासवद्विविधवैदिकमन्त्रपाठे
　　यो निष्ठया भुवि वसिष्ठमहर्षिकल्पः ॥
यात्रायाता मञ्जुयन्तः(?)[1] कियन्तो विद्यावन्तो जञ्जपूका यिवन्तः (?) ।
नानादिग्भ्यः पण्डितैरभ्युपेतं सत्रे तस्मिन्मण्डपं मण्डितं यैः ॥

१. खिस्ताब्दे तु १३६३ एतन्मिते.

द्वास्थातारौ कल्पितौ तत्र सत्रे द्वौ द्वौ द्वारि द्वारि देवर्षितुल्यौ ।
भूषाभूतो विद्विषां दर्पहन्ता नेता तेषां विश्वनाथो मनीषी ॥

आरब्धे शिबिना नृपेण विधिना सत्रे पुरा गौरवा-
दग्नेः खाण्डवखण्डनं समतनोद्गाण्डीवकोदण्डवान् ।
तस्मिन्सिद्धिनृसिंहमल्लनृपतेः सत्रे घृताजीर्णतः
किं भूयासमितीव मुञ्चति शिखी बाष्पाणि धूमच्छलात् ॥

चत्वारिंशद्दिनान्यासीन्महासोमो महोत्सवः ।
श्रीमान्सिद्धिनृसिंहेन कलिकर्णेन कारितः ॥

संभारः सर्ववस्तूनां राजसूये यथा श्रुतः ।
तथैव तत्र सत्रेऽपि जातस्तदधिकोऽपि वा ॥

रत्ने स्वर्णे गवादौ करितुरगधने भूषणे दिव्यवस्त्रे
दासीदासे निवासे विविधरसमये भक्ष्यमात्रे पवित्रे ।
चत्वारिंशद्दिनानि क्षितिपकुलमणेरास्यपद्मे प्रसन्ने
वाणी तत्रोल्ललास प्रतिपदमधिका देहिदेहीति मात्रा ॥

पामरी(?) वलयकुण्डलादिकं दृष्टपूर्वमपि येन न क्वचित् ।
तेन तत्र नृपतेः प्रसादतो भिक्षुणा निजतनौ समर्पितम् ॥

दिव्यान्येव गृहाणि दिव्यवसुधारत्नानि दिव्याम्बरं
दिव्यान्येव विभूषणानि सदयो दिव्यानि रत्नानि च ।
नेपाले प्रचरन्ति यानि वसुधावस्तूनि दिव्यान्यसौ
श्रीमत्सिद्धिनृसिंहमल्लनृपतिः सर्वाणि तान्यार्पयत् ॥

यानि दृष्टानि वस्तूनि न श्रुतानि कदाचन ।
तानि दत्तानि सर्वाणि तत्र सत्रे महीभुजा ॥

येनाकारि जगत्रयोपरि मठो होमोऽपि कोट्याहुति-
र्दत्ता स्वर्णशतद्वयी प्रतिदिनं किं किं न दत्तं धनम् ।
दत्तस्तण्डुलपर्वतोऽपि विधिना कल्पद्रुमोऽप्यद्भुतः
श्रीमत्सिद्धिनृसिंहमल्लनृपतिः कर्णावतारो ध्रुवम् ॥

विद्यावन्तः कियन्तो विविधगुणभृतः केऽपि विद्याविहीना
नानादिग्भ्यः समेताः श्रुतनृपतिगुणा भिक्षवो लक्षसंख्याः ।
तेषामन्नैः सुवर्णैः सुललितवसनैर्भूषणाद्यैर्धनौघै-
र्दारिद्र्यं वारयित्वा नृग इव मुमुदे देवकल्पोऽवनीन्द्रः ॥
कर्णः कन्यातनूजो बलिरपि विदितः किंतु दैतेयजन्मा
पाषाणो देवतानां मणिरजनि महादारु देवद्रुमोऽपि ।
भ्रान्तो राजा नृगोऽपि प्रथितभुजबलो भार्गवो मातृहन्ता
कोऽन्यो धन्यो वदान्यो जगति विजयते सिद्धिपूर्वान्नृसिंहात् ॥
नित्यानि गीतानि मनोहराणि वाद्यानि हृद्यानि च कौतुकानि ।
अन्नानि वस्त्राणि विभूषणानि सर्वाणि जातानि च तत्र सत्रे ॥
यावच्चन्द्रदिवाकरावुदयतो यावन्महीमण्डलं
यावत्पर्वतनन्दिनी पशुपतेरुत्सङ्गमालिङ्गति ।
यावज्जह्नुकलिन्दयोरपिसुते तावद्धरीवर्ततां
श्रीमत्सिद्धिनृसिंहमल्लनृपतेरेषा यशोवल्लरी ॥

अथ नेपालभाषा लिख्यते—

संवत् ७९७ फाल्गुणमासे शुक्लपक्षे दशम्यां तिथौ आर्द्रापरपुनर्वसुनक्षत्रे आयुष्मान्‌योगे बृहस्पतिवासरे थ्व कुह्नु कोट्याहुतियज्ञ याङन देवतास्थापन याङन नियछपु गजुरिछास्यं देवो दयकाव आयप्रत्याय दुंता । रोव ७ पोवि वूं रोव ह्नेस पविखं ३ खोरागार वूं रोव श्लंपि १४ तवधर वूं करख छि १ थंथछे वाटिका थ्व तेया वरसानन नित्यपूजानिश्राद्धहोम याङन वुंसाधन वुगंयातन इन्द्रयातन मतंछोपके स्वह्नन्तो धारे कार्तिकलछिघेर ह्लछि धारेण जलदेवाछोयके कृष्णाष्टमीकुह्नु चाक्रमतं छोयके थ्वते जुलो भूय रोव गुं ९ यंथाको वूं रोव च्या ८ काकापलि रोव श्लनछि १२ गुस्तलको वूं रोव ह्नेस ७ खोमोर वूं थ्वत वूया वरसानन फाल्गुनशुक्लपूर्णिमासी प्रतिपत्संधि स दोलयात्रा ज्येष्ठशुक्लपूर्णिमा कुह्नु स्नानयात्रा आषाढशुक्लद्वादशी कुह्नु शयनपूजा देवशयन याचके श्रावण-

शुक्ल द्वादशी कुह्नु पवित्रारोहण श्रावणकृष्णाष्टमी कुह्नु जन्माष्टमीपूजा चाकमतं छोयके कार्तिकशुक्लद्वादशी कुह्नु उत्थानपूजा वारी ब्राह्मनेयातं दंशं गुये फं ९० जाक्य विय थ्व छपतकजुरो । भूय रोव श्लंखू १६ थ्वे वूं रोव स्व थ्वां वूं थ्वतेय वरसानंन कार्तिकलछि चेकन कुडघुन ६ । श्लंछि नियपात १२० चाकमतं छोयके मालभूय निश्राव दछिना यात मगाङाव तंङा रोव ङा ९ न्यंखुवुं—

(इन्स्क्रिप्शन्स् फ्रॉम् नेपाल २३–२६).

---

# (४१)

## नेपालपालस्य श्रीजयदेवमहीपतेः प्रशस्तिः ।

त्र्यक्षस्त्र्यव्ययात्मा त्रिसमयसदृशस्त्रिप्रतीतस्त्रिलोकी-
त्राता त्रेतादिहेतुस्त्रिगुणमयतयात्र्यादिभिर्वर्णितोऽलम् ।
त्रिस्रोतोधौतमूर्धा त्रिपुरजिदजितो निर्विबन्धत्रिवर्गो
यस्योत्तुङ्गस्त्रिशूलस्त्रिदशपतिनुतः (पापिनां) तापनोऽभूत् ॥
राजद्रावणमूर्धपङ्क्तिशिखरव्यासक्तचूडामणि-
श्रेणीसंगतिनिश्चलात्मकतया लङ्कां पुनानाः पुरीम् ।
...............द्व...............................संगताः
श्रीबाणासुरशेखराः पशुपतेः पादाणवः पान्तु वः ॥
सूर्याद्ब्रह्मप्रपौत्रान्मनुरथ भगवाञ्जन्म लेभे ततोऽभू-
दिक्ष्वाकुश्चक्रवर्ती नृपतिरपि ततः श्रीविकुक्षिर्बभूव ।
जात.........................विदितो भूमिपः सार्वभौमो
भूतोऽस्माद्विश्वगश्वः प्रबलनिजबलव्याप्तविश्वान्तरालः ॥
राजाष्टोत्तरविंशतिक्षितिभुजस्तस्माद्व्यतीत्य क्रमा-
त्संभूतः सगरः पतिः......................रायाः क्षितेः ।
जातोऽस्मादसमञ्जसो नरपतिस्तस्मादभूदंशुमा-
न्स श्रीमन्तमजीजनन्नरवरो भूपं दिलीपाह्वयम् ॥

भेजे जन्म ततो भगीरथ इति ख्यातो नृपोत्रान्तरे
भूमाला·························· रघोरप्यजः ।
श्रीमत्तुङ्गरथस्ततो दशरथः पुत्रैश्च पौत्रैः समं
राज्ञोऽष्टावपरान्विहाय परतः श्रीमानभूल्लिच्छविः ॥
अस्त्येव क्षितिमण्डलैकतिलको लोकप्रतीतो महा-
ना··················· प्रभावमहतां मान्यः सुराणामपि ।
स्वच्छं लिच्छवि नाम बिभ्रदपरो वंशः प्रवृत्तोदयः
श्रीमच्चन्द्रकलाकलापधवलो गङ्गाप्रवाहोपमः ॥
तस्माल्लिच्छवितः परेण नृपतीन्हित्वा प·······रं
श्रीमान्पुष्पपुरे कृतिः क्षितिपतिर्जातः सुपुष्पस्ततः ।
सार्कं भूपतिभिस्त्रिभिः क्षितिभृतां त्यक्त्वान्तरे विंशतिं
ख्यातः श्रीजयदेवनामनृपतिः प्रादुर्बभूवापरः ॥
एकादशक्षिति····················
त्यक्त्वान्तरे विजयिनो जयदेवनाम्नः ।
श्रीमान्बभूव वृषदेव इति प्रतीतो
राज्ञोत्तमः सुगतशासनपक्षपाती ॥
अभूत्ततः शंकरदेवनामा श्रीधर्मदेवोऽप्युदपादि तस्मात् ।
श्रीमानदेवो नृपतिस्ततोऽभूत्ततो महीदेव इति प्रसिद्धः ॥
वसन्त इव लोकस्य कान्तः शान्तारिविग्रहः ।
आसीद्वसन्तदेवोऽस्माद्दान्तसामन्तवन्दितः ॥
अस्यान्तरेऽप्युदयदेव इति क्षितीशा-
ज्जातास्त्रयोदश ततश्च नरेन्द्रदेवः ।
मानोन्नतो नतसमस्तनरेन्द्रमौलि-
मालारजोनिकरपांशुलपादपीठः ॥
दाता सद्द्रविणस्य भूरिविभवो जेता द्विषत्संहतेः
कर्ता बान्धवतोषणस्य यमवत्पाता प्रजानामलम् ।

हर्ता संश्रितसाधुवर्गविपदां सत्यस्य वक्ता ततो
जातः श्रीशिवदेव इत्यभिमतो लोकस्य भर्ता भुवः ॥
देवी बाहुबलाढ्यमौखरिकुलश्रीवर्मचूडामणि-
ख्यातिह्रेपितवैरिभूपतिगणश्रीभोगवर्मोद्भवा ।
दौहित्री मगधाधिपस्य महतः श्र्यादित्यसेनस्य या
व्यूढा श्रीरिव तेन सा क्षितिभुजा श्रीवत्सदेव्यादरात् ॥
तस्माद्भूमिभुजोऽप्यनायत जितारातेरजय्यः परै
राजश्रीजयदेव इत्यवगतः श्रीवत्सदेव्यात्मजः ।
त्यागी मानधनो विशालनयनः सौजन्यरत्नाकरो
विद्वा'''''''चिराश्रयो गुणवतां पीनोरुवक्षःस्थलः ॥
माद्यद्दन्तिसमूहदन्तमुसलक्षुण्णारिभूभृच्छिरो-
गौडोड्रादिकलिङ्गकोसलपतिश्रीहर्षदेवात्मजा ।
देवी राज्यमती कुलोचितगुणैर्युक्ता प्रभूता कुलै-
र्येनोढा भगदत्तराजकुलजा लक्ष्मीरिव क्ष्माभुजा ॥
अङ्गश्रिया परिगतो जितकामरूपः
काञ्चीगुणाढ्यवनिताभिरुपास्यमानः ।
कुर्वन्सुराष्ट्रपरिपालनकार्यचिन्तां
यः सार्वभौमचरितं प्रकटीकरोति ॥
राज्यं प्राज्यसुखोर्जितद्विजजनप्रत्यर्पिताज्याहुति-
ज्योतिर्जातशिखाविजृम्भणजिताशेषप्रजापङ्कजम् ।
बिभ्रत्कण्टकवर्जितं निजभुजावष्टम्भविस्फूर्जितं
शूरत्वात्परचक्रकाम इति यो नाम्ना परेणान्वितः ॥
स श्रीमाञ्जयदेवाख्यो विशुद्धबृहदन्वयः ।
लब्धप्रतापः संप्राप्तबहुपुण्यसमुच्चयः ॥
मूर्तीरष्टाभिरष्टौ महयितुमतुलैः स्वैर्दलैरष्टमूर्तेः
पातालादुत्थितं किं कमलमभिनवं पद्मनाभस्य नाभेः ।

देवस्यास्यासनायोपगतमिह चतुर्वक्त्रसादृश्यमोहा-
द्विस्तीर्णं विष्टरं किं प्रविकसितसिताम्भोजमम्भोजयोनेः ॥
कीर्णा किं भूतिरेषा सपदि पशुपतेर्नृत्यतोऽत्र प्रकामं
मौलीन्दोः किं मयूखाः शरदमभिनवां प्राप्य शोभामुपेताः।
भक्त्या कैलासशैलाद्धिमनिचयरुचः सानवः किं समेता
दुग्धाब्धेरागतः किं गलगरसहजप्रीतिपीयूषराशिः ॥

राज्ञः ॥

देवं वन्दितुमुद्यतो द्युतिमतो विद्योतमानद्युतिः
किं ज्योत्स्नाधवला फणावलिरियं शेषस्य संदृश्यते।
अन्तर्दूररसातलाश्रितगतेर्देवं प्रभावश्रिया
किं क्षीरस्नपनं विधातुमुदिताः क्षीरार्णवस्योर्मयः ॥
विष्णोः पातालमूले फणिपतिशयनाक्रान्तिलीलासुखस्था-
दाज्ञां प्राप्योत्पतन्त्यास्त्रिपुरविजयिनो भक्तितोऽभ्यर्चनाय।
लक्ष्म्याः संलक्ष्यते प्राक्करतलकलितोत्फुल्ललीलासरोजं
किं वेतीत्थं वितर्कास्पदमतिरुचिरं मुग्धसिद्धाङ्गनानाम् ॥
नालीनालीकमेतन्न खलु समुदितं राजतो राजतोऽहं
पद्मा पद्मासनाङ्को कथमनुहरतो मानवा मा नवा मे।
पृथ्व्यां पृथ्व्यां न मादृग्भवति हृतजगन्मानसे मानसे वा
भास्वान्भास्वान्विशेषं जनयति नहि मे वासरो वा सरो वा ॥
इतीव चामीकरकेसरालीसिन्दूररक्तद्युतिदन्तपङ्क्त्या।
राजीवराजीं प्रति जीवलोके सौन्दर्यदर्पादिव सप्रहासम् ॥
एषाभाति कुलाचलैः परिवृता प्रालेयसंसर्गिभि-
र्वेदी मेरुशिलेव काञ्चनमयी देवस्य विश्रामभूः।
शुभ्रैः प्रान्तविकासिपङ्कजदलैरित्याकलय्य स्वयं
रौप्यं पद्ममचीकरत्पशुपतेः पूजार्थमत्युज्ज्वलम् ॥

राज्ञः ॥

यं स्तौति प्रकटप्रभावमहिमा ब्रह्मा चतुर्भिर्मुखै-
र्यं च श्लाघयति प्रणम्य चरणे षड्भिर्मुखैः षण्मुखः।
यं तुष्टाव दशाननोऽपि दशभिर्वक्त्रैः स्फुरत्कंधरः
सेवां यस्य करोति वासुकिरलं जिह्वासहस्रैः स्तुवन् ॥
ख्यात्या यः परमेश्वरोऽपि वहते वासो दिशां मण्डलं
व्यापी सूक्ष्मतरश्च शंकरतया ख्यातोऽपि संहारकः।
एकोऽप्यष्टतनुः सुरासुरगुरुर्वीतत्रपो नृत्यति
स्थाणुः पूज्यतमो विराजति गुणैरेवं विरुद्धैरपि ॥

राज्ञः ॥

तस्येदं प्रमथाधिपस्य विपुलं ब्रह्माब्जतुल्यं शुभं
राजद्राजतपङ्कजं प्रविततं प्रान्तप्रकीर्णैर्दलैः।
पूजार्थं प्रविधाप्य तत्पशुपतेर्यत्राापि पुण्यं मया
भक्त्या तत्प्रतिपाद्य मातरि पुनः संप्राप्नुयां निर्वृतिम् ॥
किं शंभोरुपरि स्थितं ससलिलं मन्दाकिनीपङ्कजं
स्वर्गोद्भिन्ननवाम्बुजेक्षणधिया संप्राप्तमम्भोरुहम्।
देवानां किमियं शुभा सुकृतिनां रम्या विमानावली
पद्मं किं करुणाकरस्य करतो लोकेश्वरस्यागतम्[1] ॥

राज्ञः ॥

स्रोतः स्वर्गापगायाः किमिदमवतरल्लोलकल्लोलरम्यं
किं ब्रह्मोत्पत्तिपद्मं तलकमलवरप्रेक्षणायोपयातम्।
संप्राप्तं चन्द्रमौलेरमलनिजशिरश्चन्द्रबिम्बं किमत्रे-
त्येवं यद्वीक्ष्य शङ्कां वहति भुवि जनो विस्मयोत्फुल्लनेत्रः ॥
श्रीवत्सदेव्या नृपतेर्जनन्या समं समन्तात्परिवारपद्मैः।
रौप्यं हरस्योपरि पुण्डरीकं तदादरैः कारितमत्युदारम् ॥

---

१. भगवतो बुद्धस्य.

पुण्यं पुत्रेण दत्तं शशिकरविमलं कारयित्वाब्जमुख्यं
प्रासं शुभ्रं शुभं च स्वयमपि रजतैः पद्मपूजां विधाय।
सर्वे श्रीवत्सदेवी निजकुलधवलां चित्तवृत्तिं दधाना
प्रादात्कल्याणहेतोश्चिरमवनिभुजे स्वामिने स्वर्गताय ॥
कः कुर्यात्कुलजः पुमान्निजगुणश्लाघामनिर्व्रीच्छया
राज्ञा सत्कविनापि नो विरचितं काव्यं स्ववंशाश्रयम्।
श्लोकान्पञ्च विहाय साधुरचितान्प्राज्ञेन राज्ञा स्वयं
स्नेहाद्भूभुजि बुद्धकीर्तिरकरोत्पूर्वामपूर्वामिमाम् ॥
योगक्षेमविधानबन्धुरभुजः संवर्धयन्बान्धवा-
न्स्निह्यत्पुत्रकलत्रभृत्यसहिते लब्धप्रतापो नृपः।
दीर्घायुर्नितरां निरामयवपुर्नित्यप्रमोदान्वितः
पृथ्वीं पालयतु प्रकामविभवस्फीतानुरक्तप्रजाम् ॥
संवत्[1] १९३ कार्तिकशुक्लनवम्याम्।

(इन्स्क्रिप्शन्स् फ्रॉम् नेपाल १६-१८).

---

(४२)

## प्रतापमल्लनृपतिप्रासादप्रशस्तिः।

आसीच्छ्रीसूर्यवंशे रघुनृपकुलजो रामचन्द्रो नृपेश-
स्तद्वंशे नान्यदेवोऽवनिपतिरभवत्तत्सुतो गङ्गदेवः।
तत्पुत्रोऽभून्नृसिंहो नरपतिरतुलस्तत्सुतो रामसिंह-
स्तज्जः श्रीशक्तिसिंहो धरणिपतिरतो भूपभूपालसिंहः ॥
तस्मात्कर्णाटचूडामणिरिव हरयुर्तिंसहदेवोऽस्य वंशे
भूपः श्रीयक्षमल्लो नरपतिरतुलो रत्नमल्लोऽप्यमुष्मात्।
तस्माच्छ्रीसूर्यमल्लो ह्यवनिपतिरभूत्तत्तनूजोऽमराख्यो
मल्लोऽभूत्तस्य पुत्रो रिपुगणविजयी श्रीमहेन्द्राख्यमल्लः ॥

---

1. ७५९ खिस्ताब्दे.

तस्माच्छिवसिंहोऽभूद्धरिहरसिंहः सुतस्तस्मात्।
तस्माल्लक्ष्मिनृसिंहो नरसिंहपराक्रमः [सूनुः] ॥

तस्माच्छ्रीमत्प्रतापो नरपतिरभवद्भूपमालावलीषु
न्यस्यत्पादारविन्दद्वयरसविलसद्रेणुभिर्भूषणानि।
योऽकार्षीत्कूतिखासाकिरमिति स्ववशे भोट्टभूपस्य देशा-
ञ्जग्राहैवावदीनं प्रतिदिनमपरे यं भजन्ते नरेशाः ॥

भक्तग्रामनरेशमल्लनृपतिर्दत्त्वेभमेनं भिया
भेजेऽसौ वसुधां जहार सुदृढं संधार्य दुर्गं पुनः।
श्रीमड्डम्बरशाहभूपतिबलं विध्वस्य हत्वा बलं
श्रीमत्सिद्धनृसिंहमल्लनृपतेर्जग्राह दुर्गावलीम् ॥

आस्ते क्वाप्यमरावतीव विलसद्धन्तीन्द्रदिव्याङ्गना-
युक्ता स्वर्णमयी विहारनगरी सा राजधानी परा।
श्रीमच्छ्रीकमलाधिका मधुपतेरिन्द्रेण तुल्यस्य च
प्रत्यर्थिव्रजनिर्जितस्य नवपुन्नारायणस्यापि च ॥

लक्ष्मीनारायणस्तस्माद्वीरनारायणस्ततः।
पुत्री रूपमती तस्य प्राणनारायणः सुतः ॥

सेयं रूपमती सती गुणवती स्वर्णद्युतिः सन्मति-
र्माद्यत्कुञ्जरगामिनी प्रणयिनी साक्षात्परा रुक्मिणी।
आसीत्सर्वगुणा पितुर्नरपतेः श्रीमत्प्रतापस्य सा
पत्नी प्राणसमा यथा जलनिधेः पुत्री जगत्पायिनः ॥

कर्णाटीरङ्गघाटी कुचकनकघटी कामलीलैकवाटी
स्वर्णालंकारकोटी हरिसदृशकटी चारुदेहानुपाटी।
नाम्ना राजमती महारसवती भूपप्रतापस्य सा
भूता भोगवधूटिका किल हरेर्भामेव जीवाधिका ॥

स्वर्गार्थं कृतवान्प्रतापनृपतिः सद्योषितोरेतयोः
प्रासादं वसुपत्रपद्मसदृशं शृङ्गाष्टकैः शोभितम्।

नानाचित्रविराजितं सममिदं सद्वैजयन्तेन वै
होमाद्यैरकरोच्छ्रुतिस्मृतिमतैरस्य प्रतिष्ठाविधिम् ॥

संवत् ७६९ फाल्गुनशुक्लषष्ठ्यां अनुराधानक्षत्रे हर्षणयोगे बृहस्पतिवासरे।

(इन्स्क्रिप्शन्स् फ्रॉम् नेपाल २७-२८).

---

( ४३ )

## नेपालक्षितिपालवंशावलिः।

श्री ३ भवानीशंकराभ्यां नमः।

नत्वा गिरीन्द्रतनयां प्रलयानलाभां
भालोल्लसल्ललितचन्द्रकलाभिरामाम्।
मल्लप्रतापनृपतिः स्वकुलप्रकाशां
वंशावलीं सुतनुते विमलां कवीन्द्रः॥

श्रीविष्णोर्नयनाम्बुजात्त्रिजगतीपापान्तकर्ता रविः
प्रोद्भूतस्तिमिरौघवारणघटाविद्रावणः केसरी।
कालाकारादिशां प्रकाशनिपुणः कंदर्पदर्पापहः
सानन्दं सरसीरुहेषु तनुते मैत्रीं विचित्राकृतिः॥

गाम्भीर्यादिगुणेन सागरसमो धैर्येण विन्ध्याचलः
सौन्दर्यप्रकरेण दैत्यदलनो रूपेण कामोपमः।
जातो भूमितले ततोऽतिविमले वैवस्वताख्यो मनु-
र्मर्यादा रचिता सतां समुचिता कीर्तिप्रदा येन वै॥

तद्वंशे विमले बभूव धरणीचन्द्रो दिलीपो हि यो
देवेन प्रमथाधिपेन तुलनां प्राप प्रचण्डे रणे।
यस्य प्रौढतरप्रतापदहने नित्यं द्विषः शेरते
दृष्ट्वा तस्य कलेवरं सुविमलं कामेन दग्धं वपुः॥

जातः सन्नृपसत्तमो रघुरिति ख्यातस्ततो वीर्यवा-
न्बाणाग्रैः परिमथ्य शक्रहृदयं कीर्तिः स्थिरा स्थापिता।

यस्य प्रौढतरप्रतापतपनत्रासेन सद्यः कृता
वृष्टिस्तेन धनेश्वरेण ललिता कार्तस्वरी भूतले ॥
जातो भूपवरस्ततः कलिहरः श्रीमानजो वीर्यवा-
न्दुष्टानां किल दर्पहारणविधौ प्रोद्भूतकण्ठीरवः ।
शिष्टानां प्रतिपालकः प्रतिपलं दानैः ······· म्मनः
पश्चादिन्दुमतीवियोगजनितक्लेशाब्धिमध्येऽपतत् ॥
जातो देवतनुस्ततो दशरथः कंदर्पदर्पापहः
सेनापत्यमुपेत्य पङ्कपतितः शत्रुः(क्रः) कृतो निर्भरः(यः) ।
क्रूरः कोपरतः प्रसारितभयो भेत्तुं गतः कृत्तिकां
पापे संसक्तचित्तः शनिरपि सहसा स्तम्भितो येन मार्गे ॥
जातस्तत्तनयो महानययुतो रामोऽभिरामाकृति-
र्दानेन प्रचुरेण वर्धितगुणः ख्यातस्त्रिलोकीतले ।
बद्ध्वा यो जलधिं निशाचरभटान्निर्जित्य लङ्कापुरीं
गत्वा रावणराक्षसं कलिकरं हत्वा वशे लब्धवान् ॥
तत्पुत्रः सूर्यतुल्यो लव इति विदितो प्रोल्लसद्दानपुण्यै-
र्जातो भूचक्रशक्रः प्रथितगुणचयः संमतः सज्जनानाम् ।
शत्रूणां शासकोऽसौ प्रबलरणधराधारणादत्तभारो
धर्मात्मा देवतुल्यो दशरथतनया निर्जिता येन संख्ये ॥
जातः श्रीहरिसिंहदेवनृपतिः प्रौढप्रतापोदय-
स्तद्वंशे विपुले महारिपुहरे गाम्भीर्यरत्नाकरः ।
कर्ता यः सरसामुपेत्य मिथिलां संलक्ष्य लक्ष्मप्रियो
नेपाले पुनराढ्यवैभवयुते स्थैर्यं विधत्ते चिरम् ॥
माणिक्यप्रतिमप्रतापपटलैरादीप्तलोकत्रयो
मुक्तापङ्क्तिसहस्रशोभनयशोवृन्देन संशोभितः ।
पक्षत्याकृतिकर्णवारणगिरिग्रामावनव्याकुलः
पारावारमिवेह यः परिहसत्याधाय चित्तेऽच्युतम् ॥

तत्पुत्रो यक्षमल्लः प्रबलरिपुहरः कर्णतुल्योऽवनीशः
सर्वासां नागरीणां नयनसुखकरः सर्वदः सज्जनानाम् ।
प्रोद्यद्दोर्दण्डचण्डाहृतनिशितमहाखङ्गपातैर्विपक्षा-
न्क्षिप्त्वा सद्यः क्षितीशान्क्षितितलविषये प्रोल्लसत्कीर्तिचन्द्रः ॥
तस्माच्छ्रीरत्नमल्लः समजनि विबुधाराधने दत्तबुद्धि-
र्दन्तीनां दानकर्ता प्रबलरिपुकुलोत्सादने पार्थतुल्यः ।
यद्दानाम्बुप्रवाहप्रकरविलसितां वाहिनीं वीक्ष्य नूनं
गङ्गासङ्गात्प्रवृद्धं प्रचलजलनिधिः प्रेमगर्वं मुमोच ॥
यो नु प्रौढतरान्निहत्य धरणीपालान्महासंगरे
गत्वा कान्तिपुरं चकार विमलं राज्यं तु स्वर्गोपमम् ।
श्रीसिद्धिर्हरपूर्विका हरवधूराराधनैस्तद्वशे
जाता भावहृता मुदा सुविदिता चाद्यापि या तिष्ठति ॥
प्रोद्यत्प्रौढप्रतापप्रचुरपरिलसत्कुङ्कुमक्षोदपूर्णः
कीर्णः पाटीरपङ्कैः सितकरकिरणाकारकीर्तिप्रतारः(नः) ।
मित्राणामत्र शैत्यं किमपि विरचयन्पूर्वपूर्वागतानां
तत्पुत्रः सूर्यमल्लो नरपतितिलकः प्रादुरासीत्प्रवीरः ॥
तस्मान्मल्लनरेन्द्रनामधरणीपालो बभूव प्रभुः
प्रोद्भूतप्रबलप्रतापदहनज्वालावृताहस्करः ।
यस्यारातिनितम्बिनी सुचकिता शुष्यन्मुखाम्भोरुहा
स्थित्वा पर्वतगह्वरेऽतिविषमे दैन्यं सदाभ्यस्यति ॥
पुण्यौघैर्जपयज्ञदानविपुलैर्गौरीपदार्चाफलैः
संजातस्तु महीन्द्रमल्लवसुधारत्नं ततस्तत्सुतः ।
येनेमां किल काश्यपीं वसुमतीं रत्नेन पूर्णां वरां
दत्त्वा भूमिसुराय स्वर्गभवने कीर्तिः स्थिरा स्थापिता ॥
श्रीग्रामे भक्तपूर्वे विनिहितसहसावासरूपप्रतिष्ठां
भावैर्निर्जित्य देवीं कलिकलुषहरीं दैत्यदर्पापहन्त्रीम् ।

आनीय स्वर्गतुल्ये रचितगृहवरे स्थापिता येन पूर्वे
नित्यं तत्पूजनेन त्रिभुवनललितां सिद्धिमुग्रामवाप ॥
तस्माच्छ्रीशिवसिंहनाम नृपतिर्जातो धरामण्डले
नेपालक्षितिपालभालतिलकः कंदर्पदर्पापहः ।
संसारार्णवतारणाय सततं नित्यं भवानीपद-
ध्याने दत्तमनाः समस्तविदुषां मध्ये प्रसिद्धक्रियः ॥
वैरिस्त्रीनयनाब्जनिर्गतजलैर्धाराम्बुभिर्येन वै
शस्ताः सान्द्रकबन्धरन्ध्ररुधिरैर्नद्यः समासादिताः ।
तासां संगमसंभवं सुविमलं तीर्थं प्रयागाह्वयं
यत्र स्नानकृता प्रलब्धमनिशं शत्रुक्षयं सत्फलम् ॥
तस्माद्धरिहरसिंहो नरपतिसिंहो बभूव भूपालः ।
गच्छति जलनिधिपारं कीर्तिरेकाकिनी यस्य ॥
धत्ते गैरिकरागविभ्रमभयं यस्य प्रतापोत्करो
यत्कीर्तिर्गुणपर्वतोपरिसरी कौतूहलं यच्छति ।
एतेनैव तु हेतुनास्य तु गुणान्विज्ञाय शैलोत्तमा-
न्दूरस्थाः प्रपलाय्य संनिधिममी कुर्वन्ति यद्वैरिणः ॥
श्रीलक्ष्मीनरसिंहनामनृपतिस्तस्मादभूत्सन्मति-
र्वाणाग्रैः परिपन्थिमन्थनकरः कारुण्यपुण्याकरः ।
यं दृष्ट्वा खलु वैरिवर्गवनिता कम्पाकुला सर्वदा
प्राणेशस्य सुजीवितं मम विभो देहीति संयाचते ॥
अष्टाशास्वपि यत्प्रतापतपनस्यालोक्य नित्योदयं
दीप्तात्मापि दिवानिशं भृशमहो विश्वान्धकारापहम् ।
आत्मानं सहसा समीक्ष्य मनसा हीनं हठाद्दुर्हय-
न्सायं सायमयं स्वयं दिनमणिर्दीनोऽम्बुधौ मज्जति ॥
श्रीलक्ष्मीनरसिंहभूपतिदिवप्रस्थानकालोद्यते
देवैः शङ्खमृदङ्गभेरिपटहध्वानैर्दिशः पूरिताः ।

प्रौढाः शूरतराः प्रदारितरिपोर्ब्रह्माण्डचण्डोल्लस-
न्मार्गेणैव विनिर्गताः सुयमिताः प्राणास्त्रयोऽस्यामलाः ॥
तत्पुत्रोऽसौ कवीन्द्रः क्षितिपतितिलकः श्रीप्रतापाभिधानः
सङ्ग्रामे वैरिवर्गप्रबलतरलसद्दर्पदावानलाभः ।
तर्कालंकारकोशादिकसकलमहाशास्त्रमार्गप्रवीणो
नानागद्यानवद्यासुललितकवितानर्तकीरङ्गभूमिः ॥
मेदिन्यामुदधौ सरःसु सरितां मध्ये गिरौ कानने
यस्य प्रौढतरप्रतापतपनस्यालोक्य दीप्तिं पराम् ।
अत्युत्कर्षमवेक्ष्य संप्रति समासाद्यापकर्षं चिरा-
दौर्वः खर्वयशाः प्रशाम्यति हठान्मग्नः समुद्राम्भसि ॥
दृष्ट्वा तस्य प्रतापं तपनमनुपमं हन्त हृष्टो विवस्वा-
न्मेने ब्रह्माण्डभाण्डभ्रमणविधिकृतं श्रान्तमेव श्रमौघम् ।
व्यस्ताहोरात्रभेदं त्रिभुवनभवनं व्याप्तमेनं विदित्वा
किं चायं चक्रवाकः शिथिलयति शुचं सर्वतः सर्वबीजम् ॥
शस्त्रे शास्त्रवरे सदा सुखकरे संगीतविद्यावरे
सानन्दं किल केलिकर्मकुशलव्यापारकण्ठीरवः ।
स्वर्गे भूमितले तथा दशदिशां प्रान्ते गिरौ कानने
कोऽप्यस्तीति निगद्यते मम समो राजेन्द्रचूडामणिः ॥
नेपाले संवतेऽस्मिन्हयगिरिमुनिभिः (७८७) संयुते माघमासे
सप्तम्यां शुक्लपक्षे रविदिनसहिते रेवतीऋक्षराजे ।
योगे श्रीसिद्धिसंज्ञे रजतमणिलसत्स्वर्णमुक्ताप्रवालै-
रेकीकृत्य प्रदत्तं हयशतसहितं येन दानं तुलाख्यम् ॥

इति श्रीमहाराजाधिराजश्रीश्रीराजराजेन्द्रकवीन्द्रजयप्रतापमल्लदेवविरचिता
निजवंशावली समाप्ता ।

माधुर्यादिविचित्रताखिलपदन्यासैर्मनोहारिणी
संक्षिप्तेन कवीन्द्रभूमिपतिना वंशावली निर्मिता ।

प्रत्येकं किल कीर्तिशौर्यनिखिलप्रौढप्रतापादिकं
भूपानां रचितुं विमृश्य निपुणं शक्तो न वा वाक्पतिः ॥
(इन्स्क्रिप्शन्स् फ्रॉम् नेपाल २९–३१)

---

# (४४)

॥ श्रीगणाधिपतये नमः ॥

कारणं जगतां वन्दे कण्ठादुपरि वारणम् ।
मातामहमहाशैलं महस्तदपितामहम् ॥
क्षेमं वः प्रचुरीकुर्यात्क्षोणीमभ्युद्वहन्हरिः ।
क्रोडाकृतेरभूद्यस्य क्रीडापल्वलमम्बुधिः ॥
अस्ति क्षीरार्णवोद्भूतमपांपुष्पमनुत्तमम् ।
अम्लानं यदनिर्माल्यमाधत्त शिरसीश्वरः ॥
सदामोदनिधेस्तस्य संताने यदुसंज्ञिते ।
अभूदाश्चर्यमाधुर्यं वसुधायास्तपःफलम् ॥
**संगमो** नाम राजाभूत्सारभूते तदन्वये ।
रेजे यस्य यशःसिन्धोः सरणीव सुरापगा ॥
सर्वरत्ननिधेस्तस्य सम्राडासीत्तनूभुवाम् ।
मध्ये **बुक्कमहीपालो**[1] मणीनामिव कौस्तुभः ॥
तस्य गौराम्बिकाजानेस्तनयोऽभूद्गुणोन्नतः ।
हारगौरयशःपूरहारी **हरिहरेश्वरः** ॥
यत्षोडशमहादानयशसां दिग्विहारिणाम् ।
भूयसामभवन्नालं भुवनानि चतुर्दश ॥
**प्रतापदेवरायो**ऽस्य पुत्रोऽभूद्भुवि विश्रुतः ।
प्रमोद इव मूर्तोऽयं प्रजानां स्वैर्गुणैरभूत् ॥
प्रत्यर्थिसमिधो हुत्वा प्रतापाग्नौ रणाङ्क(ङ्ग)णे ।
विहितो येन वीरेण विजयश्रीकरग्रहः ॥

---

१. वेदभाष्यादिनानाग्रन्थप्रणेता सुप्रसिद्धो माधवाचार्योऽस्यैव मन्त्रिप्रवर आसीत्.

तस्य हेमाम्बिकाजानेस्तनयो विनयोन्नतः ।
विद्यानिर्धिविशेषज्ञो वीरो विजयभूपतिः ॥
असौ विजयभूपालः पित्रा दत्तं स्वतेजसा ।
समस्तं द्राविडं देशमासिन्ध्याः पर्यपालयत् ॥

बुक्कक्षितीशसदने हरितान्ववायः
श्रीसिंहसूरिरभवत्प्रथमानकीर्तिः ।
यद्वारपञ्जरशुकाः किल सर्वशास्त्र-
सिद्धान्तभञ्जनसमर्थनकेलिलोलाः ॥

तत्पुत्रस्तार्किकाचार्यः पदवाक्यप्रमाणवित् ।
सर्वं हरिहरक्षोणीभुजां धर्ममब्रवीत्यत्(यद्धर्ममब्रवीत्?) ॥
तत्पुत्रो हम्पणाचार्यः सर्वविद्याविशारदः ।
निजेन चरितेनासीद्वसिष्ठ इव पूजितः ॥
राज्ञा हरिहरेणापि देवरायेण भूभुजा ।
अचीकरदसौ विद्वान्महादानानि षोडश ॥
सोऽयं विजयभूपालो हम्पणार्याय धीमते ।
स्वदेशे चेट्टुपेडाख्यं ग्रामं मान्यं प्रदत्तवान् ॥

स्वस्ति श्रीविजयाभ्युदयशकवर्ष १३३८ वर्तमानदुर्मुखिसंवत्सरद भाद्रपदबौळ सप्तमियलु श्रीमन्महामण्डलेश्वरश्रीवीरप्रतापविजयराय वोडयरु हरितगोत्रद आपस्तम्बसूत्रद सकलविद्याविशारद तार्किकहम्पणैयगळिगे कोट्टग्रामशासनद क्रमविंतेंदरे पडवीडुराज्यदलु सप्तनाथनु माड्डव आगरदहोवळि यनु वृत्तिपट्टिनळि शेरिवहकोनैकोट्टपट्टिन चेट्टुपडेंबग्रामक्के सल्लुव तगरइरुपेडंतांगलु सह कुलवरहगद्याण इप्पत्तुमूरुहोन्नु मूरुहणं वट्टदिन्द होन्नुहणंवड्डुहुरुळिय तुंदादिदंद मूरुहणवड्डुंवेळे अन्तुं रोक्कवराह इप्पत्तुनाल्कुहोन्नु एट्टुहणुंवेळे यकालुपळ्ळिसह चेट्टुपेड्डुग्रामवन्नु तेजोनिधियलु महामायाप्रीतियागि सर्वमान्यदानधारापूर्वकवागि कोट्टट्टु ईग्रामक्के सल्लुव सुंकद भत्य मार्गयडतोरे चेक्ककडमे वाणियरु सेट्टियरु सेणियरु

कैकोळरतेरिगिवोळगाद सकलसुवर्णादाय सकलभत्तादायसहितवागि स-र्वमान्यवागि आचन्द्रार्कस्थायियागि अनुभविसुदु ईग्रामद चतुस्सीमेय-विवर ईसानामोदलागि एर्रकोंडकेणिअकल्लुशासन अल्लिंद नडुसीमेय-कल्लुपोरडियसालु अल्लिंद आग्नेयएल्ले वाहकोल्लगे तेंकलु एल्लकुलि अल्लिंद तेंकलु कलरवयलु अल्लिंद तेंकलु. एरेयकोलेयमूडणसीमे अल्लिंद तेंकलु कारणेयकेरेये गणपोक्करैमड्डइदरिंद तेंकलु पुलिकुल अल्लिंद तेंकलु सम-यनारायणंकुलक्केवडगनकल्लु अल्लिंद वायव्य गुडदनडुवणतेवरुमरिसु अ-ल्लिंद वायव्य सदरहोइदकल्लु अल्लिंदवडगलु एट्टिकुलि अल्लिंदनाच्चिमां-गलपडुवनकोडियहुत्त अल्लिंद येत्तणङ्गेयमूडणवरपु अल्लिंद वडगलु मुरुकं-कुलियपल्लगुलियशासन अल्लिंद मूडलु मुक्कदकल्लु अल्लिंद ईसानकल्लुसालु अल्लिंदपालकोल्लेयमूडणमरिसु अल्लिंद करुवले वेले अल्लिंद एल्लेकल्लुगळु अल्लिंद एर्रकोन केणि ईचतुस्सीमेबोळगादनिधिनिक्षेपजलपाषाणसिद्धसाध्य अक्षिणि आगामि गोभूहिरण्याद्यष्टभोगवैब स्वाम्यसहितवागि सर्वमान्यदान-धारापूर्वकवागि कोट्टदु आचन्द्रार्कस्थायियागि अनुभविसुवदु।

एकैव भगिनी लोके सर्वेषामेव भूभुजाम्।
न भोज्या न करग्राह्या विप्रदत्ता वसुंधरा॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम्॥
स्वदत्ताद्विगुणं पुण्यं परदत्तानुपालनम्।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत्॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्ठिवर्षसहस्राणि विष्ठायां जायते क्रिमिः॥

सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयोभूयो याचते रामचन्द्रः॥

(कण्ट्रिब्यूशन्स् टु धि हिस्टरी ऑफ् सदर्न् इण्डिआ ४५–४८)

## (४९)

### [1]कुमारपालकारितवडनगरप्राकारप्रशस्तिः।

ओं ॥ ओं नमः शिवाय ॥

ब्रह्माद्वैतधिया मुमुक्षुभिरभिध्यातस्य बद्धाक्षरै-
रिच्छाशक्तिममीष्टवीमि जगतां पत्युः श्रुतीनां निधेः।
या व्यापारितसंहृतैः स्वसमये ब्रह्माण्डपिण्डैर्नवैः
क्रीडन्ती मणिकन्दुकैरिव सदा स्वच्छन्दमाह्लादते ॥
गीर्वाणैर्वीतगर्वे दनुजपरिभवात्प्रार्थितस्त्रायकार्थे
वेधाः संध्यां नमस्यन्नपि निजचुलके पुण्यगङ्गाम्बुपूर्णे।
सद्यो वीरं चुलुक्याह्वयमसृजदिमं येन कीर्तिप्रवाहैः
पूतं त्रैलोक्यमेतन्नियतमनुहरत्येव हेतोः फलं श्रीः ॥
वंशः कोऽपि ततो बभूव विविधाश्चर्यैकलीलास्पदं
यस्माद्भूमिभृतोऽपि वीतगणिताः(णनाः) प्रादुर्भवन्त्यन्वहम्।
छायां यः प्रथितप्रतापमहतीं दध्रे विपन्नोऽपि स-
न्यो जन्यावधि सर्वदापि जगतो विश्वस्य दत्ते फलम् ॥
वंशस्यास्य यशःप्रकाशनविधौ निर्मूल्यमुक्तामणिः
क्षोणीपालकिरीटकल्पितपदः श्रीमूलराजोऽभवत्।
यो मूलं कलिदावदग्धनिखिलन्यायद्रुमोत्पादने
यो राजेव करैः प्रकामशिशिरैः प्रीतिं निनाय प्रजाः ॥
यश्चापोत्कटराजराज्यकमलां स्वच्छन्दवन्दीकृतां
विद्वद्बान्धवविप्रबन्दिभृतकव्यूहोपभोग्यां व्यधात्।
यत्खड्गाश्रयिणीं तदा श्रियमलं युद्धस्फुरद्विक्रम-
क्रीताः सर्वदिगन्तरक्षितिभुजां लक्ष्म्यश्चिरं भेजिरे ॥

---

१. इतः प्रभृति मुद्रितं प्रशस्तिचतुष्टयं ऑस्ट्रिआदेशराजधान्यां वीएनानगरे विराजमानेन विद्वदवतंसेन श्रीमता डॉक्टरब्यूलरेण (G. Bühler, Ph. D., LL. D., C. I. E.) अस्मभ्यं प्रहितमस्ति. वयमपि तत्सादरं सप्रणयं चोररीकुर्मः.

सूनुस्तस्य बभूव भूपतिलकश्चामुण्डराजाह्वयो
यद्गन्धद्विपदानगन्धपवनाघ्राणेन दूरादपि।
विभ्रश्यन्मदगन्धभग्नकरिभिः श्रीसिन्धुराजस्तथा
नष्टः क्षोणिपतेर्यथास्य यशसां गन्धोऽपि निर्नाशितः॥

तस्माद्वल्लभराज इत्यभिधया क्ष्मापालचूडामणि-
र्जज्ञे साहसकर्मनिर्मितचमत्कार[ः] क्षमामण्डलो(ले)।
यत्कोपानलजृम्भितं पिशुनयत्येतत्प्रयाणश्रुति-
क्षुभ्यन्मालवभूपचक्रविकसन्मालिन्यधूमोद्गमः॥

श्रीमद्दुर्लभराजनामनृपतिर्भ्रातास्य राज्यं दधे
शृङ्गारेऽपि निषण्णधीः परवधूवर्गस्य यो दुर्लभः।
यस्य क्रोधपरायणस्य किमपि भ्रूवल्लरी भङ्गुरा
सद्यो दर्शयति स्म लाटवसुधाभङ्गस्वरूपं फलम्॥

भीमोऽपि द्विषतां सदा प्रणयिनां भोग्यत्वमासेदिवा-
न्क्षोणीभारमिदं बभार नृपतिः श्रीभीमदेवो नृपः।
धारापञ्चकसाधनैकचतुरैस्तद्वाजिभिः साधिता
क्षिप्रं मालवचक्रवर्तिनगरी धारेति को विस्मयः॥

तस्माद्भूमिपतिर्बभूव वसुधाकर्णावतंसः स्फुर-
त्कीर्तिप्रीणितविश्वकर्णविवरः श्रीकर्णदेवाह्वयः।
येन ज्याप्रथितस्वनं च्युतशरं धर्मं पुरस्कुर्वता
न्याय्येन न केवलं रिपुगणः कालोऽपि विद्धः कलिः॥

दृप्यन्मालवभूपबन्धनविधित्रस्ताखिलक्ष्मापति-
र्भक्त्याकृष्टवितीर्णदर्शनशिवो मूर्तः प्रभावोदयः।
सद्यः सिद्धरसानृणीकृतजगद्गीतोपमान(तावद्दान)स्थिति-
र्जज्ञे श्रीजयसिंहदेवनृपतिः सिद्धाधिराजस्ततः॥

वश्या वेश्म रसातलं च विलसद्भोगि..........
....भोक्तुम.... ............क्षत्राणि रक्षांसि च।

यः क्षोणीधरयागिनीं च सुमहाभोगां सिषेवे चिरं
हेलासिद्धरसाः सदा क्षितिभुज..............रे ॥
[संख्य]ातीतवितीर्णदाननिवहैः संपन्नपुण्योच्चयः
क्रीडाक्रान्तदिगन्तराल.............................. ।
..............................................................
.......................................................... ॥
........कुलभूप...........................ावलम्ब...........
क्रीडाक्रोड इवोद्धार वसुधां देवाधिदेवाज्ञया ।
देवः सोऽथ **कुमारपाल**नृपतिः श्रीराज्यचूडामणि-
र्यः स्वर्गादवतीर्णवान्हरिरिति ज्ञातः प्रभावाज्जनैः ॥
अर्णोराजनराधिराजहृदये क्षिप्त्वैक(व) बाणव्रजं
श्च्योतल्लोहिततर्पणादमदयच्चण्डीं भुजस्थायिनीम् ।
द्वारालम्बितमालवेश्वरशिरःपद्मेन यश्चाहर-
ल्लीलापङ्कजसंग्रहव्यसनिनीं चौलुक्यराजान्वयः ॥
शुद्धाचारनवावतारसरणिः सद्धर्मकर्मक्रम-
प्रादुर्भावविशारदो नयपथप्रस्थानसार्थाधिपः ।
यः संप्रत्यवतारयन्कृतयुगं योगं कलेर्लङ्घय-
न्मन्ये संहरति स्म भूमिवलयं(ये) कालव्यवस्थामपि ॥
प्रत्यू.........खण्डिताङ्गुलिदलैः पर्युल्लसत्पल्लवो
नष्टोदीच्यनराधिपोज्झितसितच्छत्रैः प्रसूनोज्ज्वलः ।
छिन्नप्राच्यनरेन्द्रमौलिकमलैः प्रौष्य(प्रोद्य)त्फलद्योतित-
श्छायां दूरमवर्धयन्निजकुले यस्य प्रतापद्रुमः ॥
आचारः किल तस्य रक्षणविधिर्विघ्नेशनिर्नाशित-
प्रत्यूहस्य फलावलोकिशकुनज्ञानस्य मं.........यः ।
देवीमण्डलखण्डिताखिलरिपोर्युद्धं विनोदोत्सवः
श्रीसोमेश्वरदत्तराज्यविभवस्याडम्बरं वाहिनी ॥

राज्ञानेन च भुज्यमानसुभगा विश्वंभरा विस्फुर-
द्रत्नद्योतितवारिराशिरशना शीताद्रिविन्ध्यस्तनी ।
एषाभूषयदस्थिकुण्डलमिव श्रुत्याश्रयं····ष्टता
बिभ्राणा नगराह्वयं द्विजमहास्थानं सुवर्णोदयम् ॥
आब्रह्मादिऋषिप्रवर्तितमहायज्ञक्रमोत्तम्भितै-
र्यूपैर्दत्तकरावलम्बनतया पादव्यपेक्षाच्युतः ।
धर्मोऽत्रैव चतुर्युगेऽपि कलितानन्दः परिस्पन्दते
तेनानंन्दपुरेति यस्य विबुधैर्नामान्तरं निर्मितम् ॥
अश्रान्तद्विजवर्गवेदतुमुलैर्त्राधिर्यमारोपितः
शश्वद्धोमहुताशधूमपटलैरान्ध्यव्यथां लम्भितः ।
नानादेवनिकेतनध्वजशिखाघातैश्च खञ्जीकृतो
यस्मिन्नद्य कलिः स्वकालविहितोत्साहोऽपि नोत्सर्पति ॥
सर्पद्विप्रवधूजनस्य विविधालंकाररत्नांशुभिः
स्मेराः संततगीतमङ्गलरवैर्वाचालतां प्रापिताः ।
अस्तान्तोत्सवलक्ष्यमाणविभवोत्कर्षप्रकाशस्थितौ
मार्गा एव वदन्ति यत्र नृपतेः सौराज्यसंपद्गुणम् ॥
अस्मिन्नागरवंशजद्विजजनस्त्राणं करोत्यध्वरे
रक्षां शान्तिकपौष्टिकैर्वितनुते भूपस्य राष्ट्रस्य च ।
मा भूत्तस्य तथापि तीव्रतपसो बाधेति भक्त्या नृपो
वप्रं विप्रपुराभिरक्षणकृते निर्मापयामास सः ॥
अस्मिन्वप्रगुणेन तोयनिलयाः प्रीणन्ति लोकं जलैः
कामं क्षेत्रभुवोऽपि वप्रकलितास्तन्वन्ति धान्यश्रियम् ।
एवं चेतसि संप्रधार्य सकलब्रह्मोपकारेच्छया
चक्रे वप्रविभूषितं पुरमिदं चौलुक्यचूडामणिः ॥
पादाक्रान्तरसातलो गिरिरिव श्लाघ्यो महाभोगतः
शृङ्गारीव तरङ्गिणीपतिरिव स्फारोदयद्वारभूः ।

उत्सर्पत्कपिशीर्षको जय इव क्रव्यादनाथद्विषां
नारीवर्गे इवेष्टकान्तरुचिरः सालोऽयमालोक्यते ॥
भोगाभोगमनोहरः फणशतैरुत्तुङ्गतां धारय-
न्यातः कुण्डलितां च यज्ञपुरुषस्याज्ञावशेनागतः ।
रत्नस्वर्णमहानिधिं पुरमिव त्रातुं स शेषः स्थितः
प्राकारः सुधया सितोपलशिराः संलक्ष्यते वृत्तवान् ॥
कामं कामसमृद्धिपूरकरमारामाभिरामाः सदा
स्वच्छन्दस्वनतत्परैर्द्विजकुलैरत्यन्तवाचालिताः ।
उत्सर्पद्गुणशालिवप्रवलयप्रीतैः प्रसन्ना जनै-
रत्रान्तश्च बहिश्च संप्रति भुवः शोभाद्भुतं बिभ्रति ॥
लक्ष्मीकुलं क्षोणिभुजो दधानः प्रौढोदयाधिष्ठितविग्रहोऽयम् ।
विभ्राजते नागरकास्यवृष्टिर्वप्रश्च चौलुक्यनराधिपश्च ॥
यावत्पृथ्वी पृथुविरचिताशेषभूभृन्निवेशा
यावत्कीर्तिः सगरनृपतेर्विद्यते सागरोऽयम् ।
तावन्नन्द्याद्द्विजवरमहास्थानरक्षानिदानं
श्रीचौलुक्यक्षितिपतियशःकीर्तनं वप्र एषः ॥
एकाहनिष्पन्नमहाप्रबन्धः श्रीसिद्धराजप्रतिपन्नबन्धुः ।
श्रीपालनामा कविचक्रवर्ती प्रशस्तिमेतामकरोत्प्रशस्ताम् ॥

संवत् १२०८ वर्षे आश्विन शुदि (२) गुरौ लिखितं नागरब्राह्मणपण्डितवाल्मेन ॥

चौलुक्य·········धिपेन कारिता प्रतोलिका यार्जुनवारिकोपगा ।
पुनर्नवोना लतफहा·····त·····वेगमिर्जाने·········नेन नृपेण कारिता ॥
चैत्रमासे शुभ्रे पक्षे प्रतिपद्गुरुवासरे ।
नन्दाष्टनृपे १६८९ नृपे वर्षे प्रशस्तिर्लिखिता पुनः ॥
नागरब्राह्मणजोशीवेणीसुतेन विष्णुजीकेन लिखिता प्रशस्तिः ॥

शुभं भवतु ॥ ७ ॥

# ( ४६ )

## कुरुक्षेत्रप्रान्तवर्तिपृथूदकक्षेत्र (Pehoa) स्थविष्णु-मन्दिरप्रशस्तिः ।

ओं नमो माधवाय ॥

याते यामवतीपतौ शिखरिषु क्षामेषु सर्वात्मना
ध्वस्ते ध्वान्तरिपौ जने विघटिते स्रस्ते च तारागणे ।
भ्रष्टे भूवलये गतेषु च तथा रत्नाकरेष्वेकता-
मेको यः स्वपिति प्रधानपुरुषः पायात्स वः शार्ङ्गभृत् ॥
दृष्टिः पायात्रिजगदखिलं शार्ङ्गिणः कान्तमूर्तेः
कान्ता सभ्रूस्फुरितसुभगस्निग्धताराभिरामा ।
उद्यत्तीव्रसरजलनिधौ मज्जतः श्रीमुखेन्दु-
स्फारज्योत्स्ना··············: स्मेरगण्डस्थलस्य ॥
क्षेत्रं कुरोर्विविधपापमलाभिघात-
दक्षं क्रियादुदयमस्तसमस्ततापम् ।
अध्यासितं मुनिगणैरुदितात्मबोध-
प्रध्वस्तगाढतिमिरप्रकटप्रमोदैः ॥
पोतः संसारसिन्धौ सुरपथगमने स्यन्दनः साधुवर्ग-
···········तवह्नेः प्रलयजलधरः संपतत्सान्द्रधारः ।
नानाव्याधिप्रबन्धप्रचुरतरतमःपङ्कविध्वंसभानु-
र्नीरं चैतत्समन्ताद्दृयतु····दुरित·······सारस्वतं वः ॥
यः शक्तः स्वकुल·········मृद्धया भिन्दानः परबलमानसं समन्तात् ।
स श्रीमाञ्जयति महेन्द्रपालदेवः[1] शान्तारिः शशधरसुन्दरः शरण्यः ॥
आसीत्तोमरतुङ्गवंशतिलकश्चण्डप्रतापोज्ज्वलो
राजा रञ्जितसाधुवृत्तहृदयो दुर्वृत्तशैलाशनिः ।

---

१. अयं कन्नौजमहीपतिः खिस्ताब्दीयनवमशतकसमाप्तौ दशमशतकारम्भे च महीं शासितवान्.

नाम्ना जाउल इत्यपूर्वचरितख्यातो दयालंकृति-
स्तत्त्वालोकिविलोकितक्षितिपतिव्यापारलब्धोदयः ॥
येन ज्ञातिकुलं क[लङ्कविकलं] नीतं परां संपदं
छिन्नारातिकरीन्द्रकुम्भशकलैः कृत्वोपहारं भुवः ।
कीर्त्या यस्य च नाकनागनिकर(लय)व्यासङ्गतः संगमा-
द्व्योम्नश्च स्फुरदिन्दुसुन्दररुचा स्वःसिन्धुलीलायितम् ॥
प्रतिदिशममराणां मन्दिराण्युच्छ्रिताग्र-
स्थगितशशधराणि स्फारमारोपितानि ।
जगति विततभासा येन दूरं विभान्ति
स्वयश इव निरोद्धुं शङ्कवो दिङ्नि(ङ्)खाताः ॥
तत्संतानमहोदधेः प्रमुदितप्रोद्यद्भुजंगाश्रया-
दुर्लङ्घा(ङ्घ्या)द्धनमौक्तिकांशुनिकरस्फारीभवत्संपदः ।
प्रख्यातादजनि स्ववंशतिलकः **श्रीवज्रटाख्यः** प्रभुः
प्राप्ताशेषमनोरथः शुभतरव्यापारतुङ्गोन्नतिः ॥
तस्य स्फुरदिन्दुरुचः शौरेरिव जलधिकन्यका जाता ।
नाम्ना मङ्गलदेवी जाया गिरिजेव गिरिशस्य ॥
तस्मात्तस्यां **जज्जुकः** प्रादुरासीदुच्चैः शान्तः सत्सु निर्मत्सरेषु ।
क्रूरः केतुर्दुर्धरारातिचक्रे क्रुध्यत्सेनाकुञ्जरध्वानरौद्रे ॥
तस्य स्फुरन्निशितखड्गनिकृत्तशत्रो-
स्त्रस्तान्धदीननिकरोद्धरणोरुकीर्तेः ।
सद्वृत्तरक्तवनितातिलकाङ्ककल्पे
कान्ते बभूवतुरुदारशशाङ्ककान्ते ॥
एका चन्द्रेति विख्याता द्वितीया नायिकेति च ।
विशिष्टगुणनिर्माणाद्द्वे एव सदनं श्रियः ॥
चन्द्रायाः समजनि **गोग्ग**नामधेयो धीराणां धुरि विनिवेशितो विधात्रा ।
भूनाथो द्विषदिभकुम्भभेदनिर्यन्मुक्ताभिर्महितमहीतलः शि(सि)ताभिः ॥

१. अयं कश्चन महेन्द्रपालस्य सामन्तः स्यात्.

असूत च विचक्षणं क्षतविपक्षपक्षप्रभं
प्रभाकरकरोत्करं स्वबलसैनिकाम्भोरुहाम् ।
अधर्मपरिपन्थिनं तदनु **पूर्णराजं** सुतं
स्ववंशगगनोदरे तुहिनदीधितं नायिका ॥

करतलस्थगिताधरपल्लवाः प्रतनुकान्ति कपोलतलोदरम् ।
सिषिचुरश्रुजलैर्यदरिस्त्रियः सरलितप्रचुरालकजालकाः ॥

तस्य भ्राता गुणनिधिरभूत्सोदरो **देवराजः**
स्फूर्जत्तेजः प्रविहतपरस्फारसेनान्धकारः ।
स्थानं क्षान्तेः क्षतकलिमलः क्षिप्तरागादिदोषः
स्निग्धच्छायस्तरुरिव ततः सत्फलानम्रमूर्तिः ॥

नामापि प्रकटतरं निशम्य यस्य क्रुद्धस्य भ्रुकुटितरङ्गिताननस्य ।
दृप्तानां युधि विकसद्विगाढभासां सस्रंसे करतलतः कृपाणदण्डः ॥

यदास्यसरसीरुहं सरसमर्थिनां पश्यतां
नितान्तमगमत्क्षणात्क्षयमुपद्रवो मानसः ।
व्यघूर्णत च संभ्रमात्प्रतिभटध्वनद्दन्तिनां
घटा विघटनोन्मुखी समिति यस्य सद्यः पुरः ॥

इत्युद्दामप्रकटितगुणोद्गाररम्याः क्रमेण
प्राप्तश्रीकाः शुभतरधियः साधुरत्नास्त्रयोऽपि ।
विष्णोः सौधान्यतुलमहसः कारयामासुरत्र
त्रस्तास्तीव्राद्भवजलनिधेर्दुर्गमान्मन्दबोधैः ॥

गोग्गेन कारितं मध्ये पूर्णराजेन पृष्ठतः ।
पुरतो देवराजेन घनान्धतमसच्छिदे ॥

चतुःसमुद्रसीमाङ्कं यावदेतन्महीतलम् ।
इदमायतनं तावद्विभातु सदनं श्रियः ॥

धन्वन्तरिप्रतिनिधिः श्रुतसारमूर्तिः
सद्बन्धुरच्युत इति प्रकटाभिधानः ।

काम्बोजजः प्रभुमनःकमलद्विरेफो
रामस्य सूनुरिह कारयिता बभूव ॥
यक्षपालकनामैको द्वितीयो गेज्जराभिधः।
पाटलाख्यस्तृतीयोऽपि ग्रामो भोगाय कल्पितः ॥
अन्नार्यैः क्ष्मानाथैः श्रेयोर्थं देहस्य।
संसारं दृष्ट्वोच्चैः कर्तव्या सद्बुद्धिः ॥
स्वकुलगगनभानुः····ि·······प्रसक्तः
श्रुतविनयविदग्धो भट्टरामः किलासीत्।
अकृत मधुरबन्धां मु[द्गल]स्तस्य सूनुः
सरसललितसारां लीलयेमां प्रशस्तिम् ॥
बभूव सूत्रधारोऽत्र दुर्लभादित्यसंज्ञकः।
························लादित्येन धीमता ॥

---

## (४७)

## सोमनाथक्षेत्रस्थस्य कस्यचन प्रासादस्य प्रशस्तिः।

ॐ ॥ ॐ नमः शिवाय।
हृदि स्थितं चिन्मयमात्मवेदिनः समाधिमास्थाय विलोकयन्ति यम्।
स चित्तसंतापमपाकरोतु वः स्तनंधयश्वेतमयूखभूषणः ॥
शैलात्मजोरसिजशृङ्गकुरङ्गनाभि-
पत्रावलीतलिनतल्पशयालुपाणिः।
पीयूषभानुकलिकाकलितावतंसो
देवः शिवानि वितनोतु दिवानिशं वः ॥
त्रैलोक्यमङ्गलमनङ्गरिपोरपत्य-
मङ्कूरितैकदशनोल्लसदाननश्रीः।
देवः प्रपद्य हृदयैकपदीं कपर्दी
भूयादनेकपमुखः सुखसंपदे वः ॥

श्रीविश्वमल्ल इति भूपतिमौलिरत्नं
चौलुक्यवंशमवतंसयति स्म जिष्णुः।
यस्य द्विधारमपि संयति मण्डलाग्र-
माराद्मंस्त शतधारमरातिवर्गः॥
आबद्धमूलमभितः क्षितिपाद्रिजात-
मुन्मूलयन्कुलिशवंशभुवा भुजेन।
सत्त्वस्य यः किमपि धाम जनेन राज-
नारायणेति जगदे जगदेकनाथः॥
यस्मिन्नात्मकलां न्यधत्त सकलक्षत्रावतंसे जग-
त्तापव्यापदपाकरिष्णुमहिमा श्रीवैद्यनाथः प्रभुः।
शस्त्रैस्तेन चिकित्सितास्तदुचितं विश्वोपकारव्रत-
स्नातेन प्रतिभूभुजामपि हृदः प्रौढा मदग्रन्थयः॥
नागल्लदेवीति बभूव यस्य जाया जयश्रीरिव देहबद्धा।
तया स राजा सुतरां बभासे मासेव देवो हरिणाङ्कमूर्तिः॥
आशान्तविश्रान्तभुजप्रतापः प्रतापमल्लावरजः स राजा।
स्वपौरुषोत्कर्षरसातिरेकादेकातपत्रां बुभुजे धरित्रीम्॥
श्रीविश्वमल्लः स्वपदेऽभिषिच्य प्रतापमल्लात्मजमर्जुनं सः।
साकं सुधापाकमभुङ्क्त नाकनितम्बिनीनामधरामृतेन॥
राकानिशाकरसनाभिगुणाभिरामो
दामोदरांश इव विक्रममांसलश्रीः।
भूपालमौलिमणिरर्जुनदेवनामा
कामार्जुनीमिव धनानि धरामदुग्ध॥
हस्ते विधाय कदनाय दुराशयानां
दानावधूतसुरशाखिनि भूमिचक्रम्।
यः स्वैरुदारचरितैरनघः प्रजानां
रक्षां चकार किल चक्रधरावतारः॥

तस्याङ्गभूर्जयति गूर्जरराज्यलक्ष्मी-
संभोगकन्दलितसौख्यनिमग्नचेताः।
क्षोणीतलमुद्धरणकेलिरसोत्तरङ्गः
सारङ्गदेव इति शार्ङ्गधरानुभावः॥
युधि यादवमालवेश्वरावकृत क्षीणबलौ बलेन यः।
पृथुविग्रहधारिणौ पुरा पतगेन्द्रो गजकच्छपाविव॥
इतश्च।
भट्टारकश्रीलकुलीशमूर्त्या तपःक्रियाकाण्डफलप्रदाता।
अवातरद्विश्वमनुग्रहीतुं देवः स्वयं बालमृगाङ्कमौलिः॥
अनुग्रहीतुं च चिरं विपुत्रकानुलूकभूतानभिशापतः पितुः।
ललाटसुर्व्या इव लाटभूषणं समेत्य कारोहणमध्युवास यः॥
अवतेरुश्चत्वारः पाशुपतव्रतविशेषचर्यार्थम्।
इह कुशिकगार्ग्यकौरुषमैत्रेया इति तदन्तसदः॥
ततस्तपस्विनां तेषां चतुर्धा जातिरुद्गता।
भुवं विभूषयामास चतुरर्णवमुद्रिताम्॥
एतैरनुगृहीतानामन्वयेन महात्मनाम्।
निःसीमवैभवं श्रीम·········कमित्यभूत्॥
गार्गेयगोत्राभरणं बभूव स्थानाधिपः कार्तिकराशिनामा।
मूर्तस्तपोराशिरिवाश्रितानामालोकमात्रेण हरन्नघानि॥
तेन स्वहस्तकमलानुगृहीतजन्मा
वाल्मीकिराशिरुदियाय दयालुचेताः।
वाणीं च तीर्थपदवीं च सदा पदानां
न्यासैः स्वचित्तविमलाकृतिभिः पुनानः॥
तेनानुगृह्य समकेति सतां प्रबोध-
कारी तपोधनयुवा त्रिपुरान्तकेति।
साक्षाद्भवन्ति विबुधाः किल तद्विधानां
हस्ताम्बुजेन दृषदोऽपि कृतप्रतिष्ठाः॥

वाल्मीकिराशेः सुगृहीतनाम्नस्तस्यैष शिष्यस्त्रिपुरान्तकेति।
तीर्थान्तरालोकनकौतुकेन पवित्रयामास दिशश्चतस्रः॥

पूर्वं तपस्विगृहिणीस्पृहणीयमूर्ति-
र्यो देवदारुविपिने विजहार देवः।
आशावधूलवणिमानमनुग्रहीतुं
तीर्थावगाहनमिषेण चचार सोऽयम्॥

समाधिपूतेन हृदम्बुजेन यः ····यि············।
ततः शुचिब्रह्मसरःसरोजैरानर्च केदारपदारविन्दे॥

जगद्गुरुं चेतसि यः प्रपद्य यागेश्वरं मूर्तमि···········।
··············· प्रसादसंपत्तिलभ्यानि तपःफलानि॥

मिथोमिलज्जह्नुकलिन्दकन्यातरङ्गहस्तोपहृतैः पयोभिः।
ससर्ज यस्याजि···············षः पाद्यमिव प्रयागः॥

प्रदक्षिणीकृत्य सतां प्रदीपः श्रीपर्वतं यः किल सर्वतोऽपि।
श्रीमल्लिनाथस्य विलोकनेन कृतार्थ··················त्ते॥

प्रेङ्खोलितानि कलसोद्भवपादमुद्रा-
निःकल्मषाकृतिषु विन्ध्यगिरेः शिलासु।
रेवाजलानि गजराजविगाहलीला-
···············षाण्यपि यः सिषेवे॥

गोदावरीतीरविहारणीभिर्वनस्थलीनामधिदेवताभिः।
कृतार्थयन्नध्वगदृक्पयोजं यो जङ्गमत्र्यम्बक···········॥

ततः शमाद्वैतरसाभिरामे रामेश्वरं चेतसि चिन्तयन्यः।
ददर्श लङ्काधिपकालरात्रेः प्रस्थानवीथीमिव सेतुलेखाम्॥

श्रीदेवपत्तनसमस्तघनस्तनीनां
नेत्रारविन्दसुकृतैरिव सानुबन्धैः।
तीर्थावगाहनधिया दिशि पश्चिमाया-
मायातवानुपशमायतनं कृती यः॥

सरस्वतीसागरसंप्रयोगविभूषिताभोगमथागमद्यः।
सोमेशचूडावलमानबालचन्द्रप्रभासंवलितं प्रभासम् ॥
इह महीतलतीर्थविगाहनादखिलतीर्थमयीं दधदाकृतिम्।
भुवनभूषणभूतमभूषयन्नगरमिन्दुकलाभरणस्य यः ॥
इह साक्षादुमाकान्तः श्रीमान्गण्डबृहस्पतिः।
आर्यमेनं विनिर्माय षष्ठं चक्रे महत्तरम् ॥
स्थानकं निजविशुद्धचरित्रैरुद्धरिष्यति महत्तर एषः।
इत्यवेत्य मुमुदे हृदि चातुर्जातकेन गुणजातरसेन ॥
अस्ति श्रीत्रिपुरान्तकोऽपि विबुधश्रेणीकिरीटोपल-
च्छायापल्लवलालितांह्रिकमलः कासां गिरामध्वनि।
यस्योद्दामचरित्रवैभवनिधेरेषा कियन्तं गुण-
ग्रामं धारयतु स्वकुक्षिकुहरक्रोडे वराकी श्रुतिः ॥
धनानि कामाधिकवामलोचनाविलोचनप्राञ्चलचञ्चलानि यः।
ददौ महादौस्थ्यनिपीडितात्मने सतां प्रपन्नार्तिहरा हि संपदः ॥
आस्थितस्य पुरुषोत्तमभूयं कामजन्मनि समाहितबुद्धेः।
यस्य पुण्यघटितस्य रमेति प्रेयसी भुवनभूषणमास्ते ॥
सरस्वतीमौलिशयालुकेतकीपलाशलक्ष्मीसहपांशुकेलयः।
महात्मनो यस्य महोज्ज्वला गुणा दिगङ्गनानामवतंसतां ययुः ॥
सोमेश्वरायतनमण्डपमुत्तरेण
श्रीभाजि जीर्णघटिकालयसंनिधाने।
श्रीकण्ठपञ्चमुखवासमधिष्ठितानि
येनाक्रियन्त कृतिनायतनानि पञ्च ॥
मातुर्माह्लणदेव्या यः श्रेयसे माह्लणेश्वरम्।
सतामध्येयमहिमा तन्मध्ये निरमापयत् ॥
उमापतेरायतनं नाम्ना गण्डबृहस्पतेः।
कृती कृतयुगाचारः कारयामास तत्र यः ॥

श्रीबृहस्पतिभार्याया उमायाः श्लाघ्यजन्मनः ।
श्रेयसे यः सतां सीमा निरमासीदुमेश्वरम् ॥
इह स्वनाम्ना त्रिपुरान्तकेश्वरं महत्तरश्रीत्रिपुरान्तको व्यधात् ।
प्रियाभिधानेन मनोरमं श्रिया रमापतिः संविदधे रमेश्वरम् ॥
गोरक्षकं भैरवमाञ्जनेयं सरस्वतीं सिद्धिविनायकं च ।
चकार पञ्चायतनान्तराले बालेन्दुमौलिस्थितमानसो यः ॥
आत्मबाहुयुगसौहृदञ्चितस्तम्भसौरभशुभं सतोरणम् ।
दूरमस्तदुरितस्तदुत्तरद्वारभूपरिसरे चकार यः ॥
संमार्जनाय देवानां कावडिद्वयमम्भसः ।
संमार्जनी जगत्याश्च कोल्हिनी प्रतिवासरम् ॥
कर्तव्यमेतदुभयं बटुकेन पटीयसा ।
स्वभासपाटकद्रव्यनैवेद्यान्नोपयोगतः ॥ (युग्मम्)
श्रीखण्डहेतोः शशिखण्डमौलिपुरानुकूल्येन मपारके यः ।
द्रम्मांश्चकार प्रतिमासमष्टावष्टापदोत्सर्गनिसर्गपूतः ॥
दातव्यं मालिकश्रेण्या शतपत्रशतद्वयम् ।
नवीनकण(र)वीराणां द्वे सहस्रे च नित्यशः ॥
घाटीवाहाय वाटीभ्यो ग्रहीतुं शुचिवेदिकाम् ।
चक्रे परीक्षिपट्टे यः षड्द्रम्मान्मासपाटके ॥
माणकद्वितयं चोषा मुद्रानामेकमाणकम् ।
घृतं कर्षाश्च चत्वारस्तैलं दीपाय तादृशम् ॥
जात्यानि पञ्च पूगानि स्थितके स्थितिशालिना ।
कोष्ठागारे गुणज्ञेन प्रत्यहं येन चक्रिरे ॥ (युग्मम्)
इहैव धूपवेलार्थं गुग्गुलस्य मणद्वयम् ।
यः पुण्येषु समासक्तः प्रतिमासमकारयत् ॥
पत्र····णां च पञ्चाशत्पत्राणि फणिवीरुधाम्
मेहरेण प्रदेयानि नित्यं बीटकहेतवे ॥

पशुपालेन तदेवं धर्मस्थानोपहारसंवद्धम् ।
श्री..........कोष्ठागारादानीय दातव्यम् ॥
चोपा माणकमेकं निर्वापे पल्लिकाद्वयं मुद्गाः ।
नित्यं घृतकर्षौ द्वाविति पशुपालाय दातव्यम् ॥
इदमेव प्रदातव्यं नित्यं नैवेद्यहेतवे ।
ततस्तदन्नं वटुना पचनीयं प्रयत्नतः ॥
पशुपालेन संकल्प्य तन्नैवेद्यं सवीटकम् ।
वटुकाय प्रदातव्यं पूजाकर्मविधायिने ॥
मण्डपिकायां स्थितके चातुर्जातकशासनात् ।
प्रत्यहं यः सतां सीमा द्रम्ममेकमकारयत् ॥
अत्रैव कारयामास प्रतिमासमुदारधीः ।
स्थितके यो नवद्रम्मान्वटुकग्रासहेतवे ॥
पूजाप्रतिमां कर्तुं प्रतिमासमुपेयुपः ।
देयाः पञ्चदश द्रम्मा पशुपालस्य धर्मतः ॥
चातुर्जातकपादानां यः संमिलितपोत्तके ।
ततः पञ्चदशद्रम्मान्प्रतिमासं व्यधत्त यः ॥
हट्टानि यो विशिष्टानि त्रीणि प्रीणितमानसः ।
चातुर्जातकपादेभ्यो वित्तेनादाय दत्तवान् ॥
तेषां मध्यादुत्तमं हट्टमेकं देवश्रद्धामालिना मालिकेभ्यः ।
नित्यं पूजापुष्पजातोपहारैः श्रीमच्चातुर्जातकेन प्रदत्तम् ॥
चैत्रीमहे भाद्रपदीमहे च पवित्रकं विस्तरणं च कर्तुम् ।
महाजनोऽपि प्रतिहट्टमेकं द्रम्मं विशेषस्थितके चकार ॥
कोष्ठागारेण पूगानि मेहरेण दलानि च ।
शिवरात्रौ प्रदेयानि चातुर्जातकबीटके ॥
श्रीसोमनाथप्रभुराजपाटिकात्रये त्रिभिर्हट्टवणिग्भिरात्मना ।
सन्नालिकेराणि युगाश्च कोमलाः सदा विधेयानि विशुद्धबुद्धिभिः ॥

अमूनि सोमेश्वरदेवरीत्या संपूज्य पञ्चायतनानि पूर्वम् ।
अनेन पश्चात्पशुपालकेन श्रीदेवपाव्यामधिरोहणीयम् ॥
चैत्री भाद्रपदी भग्नपतितोद्धारहेतवे ।
चातुर्जातकपादेभ्यो धर्मस्थानमदत्त यः ॥
स्वोपार्जितेन शुचिना विभवेन धर्म-
स्थानं च शासनमिदं च विनिर्ममे यः ।
तेनास्य कीर्तननिबद्धयशःपताका
राकामृगाङ्कधवलाकृतिरुल्ललास ॥
श्रीगण्डराणकबृहस्पतिकीर्तनस्य
सारङ्गभूपतिसरस्तटभूषणस्य ।
यः श्रीविलासगृहमायतनस्य मध्ये
स्वात्मीयदेवकुलिकां रचयां चकार ॥
तादृग्विशेषशुचिताधिगमाय सन्त-
श्चित्तेषु बिभ्रति यदीयगुणानजस्रम् ।
पुष्णन्ति सिन्धुतनयाहृदयाधिनाथ-
नाभीसरोरुहमृणालसनाभितां ये ॥
निर्व्याजभक्तिरसवासितविश्वनाथ-
माबिभ्रतः सरिदभीकगभीरमन्तः ।
एतस्य शारदतुषारमयूखलेखा-
निष्कल्मषाणि चरितानि जगत्पुनन्ति ॥
सोमार्कवक्त्रशशिमण्डलतो निपीय
पीयूषबद्धसखितानि सुभाषितानि ।
एषा प्रशस्तिरनवद्यपदार्थबन्धा
धन्धात्मजेन विदधे धरणीधरेण ॥
एनां लिलेख मन्त्री विक्रम इति पूर्णसिंहतनुजन्मा ।
उदटङ्कयदथ शिल्पी नाहडतनयश्च पूणसीह इति ॥

श्रीनृपविक्रमसं० १३४३ वर्षे माघ शुदि ९ सोमे लिङ्गप्रतिष्ठामहोत्सवः समजनि ॥

---

(४८)

मालवमहीपालप्रशस्तिः ।

ओं नमः शिवाय ॥

गङ्गाम्बुसंसिक्तभुजंगमालवाले कलेन्दोरमलाङ्कुराभा ।
यन्मूर्ध्नि नम्रेहितकल्पवल्ल्या भातीव भूत्यै स तवास्तु शंभुः ॥

सानन्दनन्दिकरसुन्दरसान्द्रनान्दी-
नादेन तुम्बुरुमनोरसगानमानैः ।
नृत्यन्त्यवश्यमनिशं सुरवासवेश्या
यस्याग्रतो भवतु वः स शिवः शिवाय ॥

मूर्धस्थिताभ्रसरितोऽक्षमयेव शंभो-
रर्धाङ्गमङ्गघटनाद्धनमाश्रयन्ती ।
दृष्टात्मनाथ वशतां सकलाङ्गतुष्टा
पुष्टिं नगेन्द्रतनया भवतां विदध्यात् ॥

गणेशो वः सुखायास्तु निशातः परशुः करे ।
यस्य नम्रवनावद्यकन्दोच्छित्त्या इवोद्यतः ॥

अस्त्युर्वीध्रः प्रतीच्यां हिमगिरितनयः सिद्धदांपत्यसिद्धेः
स्थानं च ज्ञानभाजामभिमतफलदोऽखर्वितः सोऽर्बुदाख्यः ।
विश्वामित्रो वसिष्ठादहरत बलतो यत्र गां तत्प्रभावा-
ज्जज्ञे वीरोऽग्निकुण्डाद्रिपुबलनिधनं यश्चकारैक एव ॥

मारयित्वा परान्धेनुमानिन्ये स ततो मुनिः ।
उवाच परमाराख्यः पार्थिवेन्द्रो भविष्यसि ॥

तदन्ववायेऽखिलयज्ञसंघतृप्तामरोदाहृतकीर्तिरासीत् ।
उपेन्द्रराजो द्विजवर्गरत्नं शौर्यार्जितोत्तुङ्गनृपत्वमानः ॥

तत्सूनुरासीदरिराजकुम्भिकण्ठीरवो वीर्यवतां वरिष्ठः ।
श्रीवैरिसिंहश्चतुरर्णवान्तधात्र्यां जयस्तम्भकृतप्रशस्तिः ॥

तस्माद्बभूव वसुधाधिपमौलिमाला-
रत्नप्रभारुचिररञ्जितपादपीठः ।
श्रीसीयकः करकृपाणजलोर्मिमग्न-
शत्रुव्रजो विजयिनां धुरि भूमिपालः ॥

तस्मादवन्तितरुणीनयनारविन्द-
भास्वानभूत्करकृपाणमरीचिदीप्रः ।
श्रीवाक्पतिः शतमखानुकृतिस्तुरंगा
गङ्गासमुद्रसलिलानि पिबन्ति यस्य ॥

जातस्तस्माद्वैरिसिंहोऽन्यनाम्ना-लोको ब्रूते वज्रटस्वामिनं यम् ।
शत्रोर्वर्गं धारयासेर्निहत्य श्रीमद्धारा सूचिता येन राज्ञा ॥

तस्मादभूदरिनरेश्वरसंघसेना-
गर्जद्गजेन्द्ररवसुन्दरतूर्यनादः ।
श्रीहर्षदेव इति खोट्टिगदेवलक्ष्मीं
जग्राह यो युधि नगादसमप्रतापः ॥

पुत्रस्तस्य विभूषिताखिलधराभोगो गुणैकास्पदं
शौर्याक्रान्तसमस्तशत्रुविभवाधिन्याय्यवित्तोदयः ।
वक्तृत्वोच्चकवित्वतर्ककलनप्रज्ञातशास्त्रागमः
श्रीमद्वाक्पतिराजदेव इति यः सद्भिः सदा कीर्त्यते ॥

कर्णाटलाटकेरलचोलशिरोरत्नरागिपदकमलः ।
यश्च प्रणयिगणार्थितदाता कल्पद्रुमप्रख्यः ॥

युवराजं विजित्याजौ हत्वा तद्वाहिनीपतीन् ।
खड्ग उर्ध्वीकृतो येन त्रिपुर्यां विजिगीषुणा ॥

तस्यानुजो निर्जितहूणराजः श्रीसिन्धुराजो विजयार्जितश्रीः ।
श्रीभोजराजोऽजनि येन रत्नं नरोत्तमाकम्प(ल्प ?)कृदद्वितीयम् ॥

आ कैलासान्मलयगिरितोऽस्तोदयाद्रिद्वयादा
भुक्ता पृथ्वी पृथुनरपतेस्तुल्यरूपेण येन ।
उन्मूल्योर्वीभरगुरुगणा लीलया चापयष्ट्या
क्षिप्ता दिक्षु क्षितिरपि परां प्रीतिमापादिता च ॥
साधितं विहितं दत्तं ज्ञातं तद्यन्न केनचित् ।
किमन्यत्कविराजस्य श्रीभोजस्य प्रशस्यते ॥
चेदीश्वरेन्द्ररथतोग्गलभीममुख्या-
न्कर्णाटलाटपतिगूर्जरराट्तुरुष्कान् ।
यद्भृत्यमात्रविजितानवलोक्य मौला
दोष्णां बलानि कलयन्ति न····लो···· ॥
केदाररामेश्वरसोमनाथसुण्डीरकालानलरुद्रसत्कैः ।
सुराश्रयैर्व्याप्य च यः समन्ताद्यथार्थसंज्ञां जगतीं चकार ॥
तत्रादित्यप्रतापे गतवति सदनं स्वर्गिणां भर्गभक्ते
व्याप्ता धारेव धात्री रिपुतिमिरभरैर्मौललोकस्तदाभूत् ।
विस्रस्ताङ्गो निहत्योद्भटरिपुतिमिरं खड्गदण्डांशुजालै-
रन्यो भास्वानिवोद्यन्द्युतिमुदितजनात्मोदयादित्यदेवः ॥
येन धरणीवराहः परमारेणोद्धृतो निरायासात् ।
तस्यैतस्या भूमेरुद्धारो बत कियन्मात्रः ॥
कुंवान्य···· वाजिव्रजरु··················
······································· ।
······································
······································· ॥

(अग्रे सर्वं त्रुटितम् ।)

---

## ( ४९ )

## कम्बोजदेशस्थशिवालयप्रशस्तिः ।

जयत्यनन्यसामान्यमहिमा परमेश्वरः ।
ब्रह्मोपेन्द्राञ्जलिन्यासद्विगुणाङ्घ्रियुगाम्बुजः ॥

राजा श्रीरुद्रवर्मासीत्त्रिविक्रमपराक्रमः ।
यस्य सौराज्यमद्यापि दिलीपस्येव विश्रुतम् ॥
तस्याभूतां भिषङ्मुख्यौ भ्रातरावश्विनाविव ।
ब्रह्मदत्तः स यो ज्येष्ठो ब्रह्मसिंहः स योऽनुजः ॥
तयोरपि महाभाग्यौ भागिनेयौ बभूवतुः ।
धर्मदेवः प्रथमजः सिंहदेवस्त्वनन्तरः ॥
स्वशक्त्याक्रान्तराज्यस्य राज्ञः **श्रीभववर्मणः** ।
श्रीगम्भीरेश्वरो यस्य राज्यकल्पतरोः फलम् ॥
यस्य तौ मन्त्रिणावास्तां सन्मतौ कृतवेदिनौ ।
धर्मशास्त्रार्थशास्त्रज्ञौ धर्मार्थाविव रूपिणौ ॥
**महेन्द्रवर्मणो** भूयः श्रीमतः पृथिवीपतेः ।
तौ चाप्यमात्यतां प्राप्तौ प्रत्ययौ कृत्यवस्तुषु ॥
सिंहदेवोऽनुजो राज्ञा दूतत्वे सत्कृतः कृती ।
प्रीतये प्रेषितः प्रेम्णा चम्पाधिपनराधिपम् ॥
धर्मदेवस्य तु पुनस्तनयोऽभूदनल्पधीः ।
कुलकाननसिंहो यः सिंहवीर इतीरितः ॥
विद्वान्योऽद्यापि विद्वद्भिरापीतकवितारसः ।
**श्रीशानवर्मनृपतेरभू(भ)वन्मन्त्रिसत्तमः** ॥
निकामवरदं देवं श्रीनिकामेश्वरं हरम् ।
हरिं च सिद्धिसंकल्पस्वामिनं सिद्धिदायिनम् ॥
योऽतिष्ठिपदिमौ देवौ श्रद्धया भूरिदक्षिणौ ।
कीर्तिस्तम्भाविवोदग्रौ यौ स्थितावा भुवः स्थितेः ॥
तस्य सूनुरसूयादिदोषैरस्पृष्टमानसः ।
योऽभवद्भवसंन्यस्तचित्तवृत्तिरुदारधीः ॥
बाल्येऽपि विनयोपेतो यौवनेऽपि जितेन्द्रियः ।
त्रिवर्गारम्भकालेऽपि धर्मे यस्त्वधिकादरः ॥

यस्मिन्नैदंयुगीनेऽपि सदाचारावलम्बिनि ।
कलिप्रचालितो धर्मो न स्खलत्येकपादपि ॥
श्रीमतो राजसिंहस्य जयिनो जयवर्मणः ।
यो वैद्यो वेदितव्यानां वेत्तापि निरहंकृतिः ॥
पुनः सत्कृत्य यं राजा प्रादात्स्वे राजमातुले ।
अलब्धराजशब्देऽपि लब्धराजार्हसंपदि ॥
पश्चादाढ्यपुरस्यास्य योऽध्यक्षत्वे कुलक्रमात् ।
योग्योऽयमिति सत्कृत्य स्वयं राज्ञा नियोजितः ॥
यस्मिन्नवति धर्मेण पराभ्युदयकारिणि ।
अन्वर्थसंज्ञां संप्राप्तमिदमाढ्यपुरं पुरम् ॥
उचितं यः करादानमारामेभ्यः कुटुम्बिनाम् ।
अनाददत्प्रभुरपि पूर्णां वृत्तिमदादितः ॥
रोगिणामर्थिनां वापि विस्रम्भाद्रुपितं वचः ।
शृण्वतो यस्य करुणा द्विगुणा समजायत ॥
यन्मदीयं शुभं नाम जन्मप्रभृति संभृतम् ।
तदस्तु पितुरेवेति संकल्पो यस्य कीर्तितः ॥
शिवयज्ञेन यो देवान्मुनीनध्ययनेन च ।
पितृंश्चातर्पयत्तोयैः सत्पुत्रकरनिःसृतैः ॥
तेनेह सिंहदत्तेन दत्तदातव्यवस्तुना ।
स्थापितो विजयस्यायं दाता श्रीविजयेश्वरः ॥
अस्मिस्तेन च यद्दत्तं दासारामादि किंचन ।
तदेव देवस्वमिति न हरेन्नापि नाशयेत् ॥
वैशाखप्रथमद्विपञ्चकदिने द्वाराष्टबाणैर्युते
जीवश्चापयुतो वृषे कविसुतः सिंहार्धगश्चन्द्रमाः ।
कौलीरे वणिजो(ऽवनिजो) घटे रविसुतः शेषास्तु मेषस्थिताः
सोऽयं श्रीविजयेश्वरो विजयते यः कीटलग्ने स्थितः ॥

(कम्बोज इन्स्क्रिप्शन्स् ५-८

( ६० )

**कम्बोजदेशस्थशिवालयप्रशस्तिः।**

जितमिन्दुवतंसेन मूर्ध्ना गङ्गां बभार यः।
उमाभ्रूभङ्गजिह्मोर्मि मालामालु(?)मिवामलाम्॥
राजा श्रीभववर्मेति पतिरासीन्महीभृताम्।
अप्रधृष्यमहासत्त्वा तु(त्त्वस्तु)ङ्गो मेरुरिवापरः॥
सोमान्वये प्रसूतस्य सोमस्येव पयोनिधौ।
केनापि यस्य तेजस्तु जाज्वलिते(लीति ?) सदाहवे॥
अन्तः समुत्था दुर्ग्राह्या मूर्त्यभावादतीन्द्रियाः।
यदा षडरयो येन जिता बाह्येषु का कथा॥
नित्यदानपयःसिक्तकरानेव मतङ्गजान्।
आत्मानुकारादिव यः समराय समग्रहीत्॥
शरत्कालाभियातस्य परानावृततेजसः।
द्विषामसह्यो यस्यैव प्रतापो न रवेरपि॥
यस्य सेनारजो धूतमुज्झितालंकृतिष्वपि।
रिपुस्त्रीगण्डदेशेषु चूर्णभावमुपागतम्॥
रिपोरिव मनः शुष्कं नगरीपरिखाजलम्।
यस्य योधैमरापीतमासद्रै रतिना(?) सह॥
परीतायामपि पुरि ज्वलता यस्य तेजसा।
पुनरुक्त इवारोपः प्राकारे जातवेदसः॥
जित्वा पर्वतभूपालांस्तनोति सकुला भुवः।
वन्दिभिः सगुणानीशै(?)र्यशोभिरिव यो दिशः॥
येनेयद्वैरवंश्यानां मर्यादालङ्घनं कृतम्।
यदेषामवधिर्भूमेरतिक्रान्ता पराक्रमैः॥
शक्त्यापि पूर्वं विजिता भूमिरम्बुधिमेखला।
प्रभुत्वे क्षमया येन सैव पश्चादजीयत॥

यस्याकृष्टाः प्रभावेन परे युध्यजिता अपि ।
राजश्रियम(मु)पादाय नमन्ते चरणाम्बुजे ॥
परेणाक्रान्तपूर्वेयमखिलेति विचिन्तया ।
अजिताम्भोधिपर्यन्तामवनिं यो न शाम्यति ॥
अवाप्य षोडश कलाः शशाङ्को याति पूर्णताम् ।
असंख्या अपि यो लब्ध्वा न पर्यस्तः कदाचन ॥
नास्ति सर्वगुणः कश्चिदिति वाक्यं महाधियाम् ।
येनासीद्विकृतमिदं(?) स्वेनापि वचसा विना ॥
तस्य राजाधिराजस्य नवेन्दुरिव यः सुतः ।
गुणकान्त्यादिभिर्योगादुन्नेत्रयति यः प्रजाः ॥
रागं दधाति भूपानां·········आरतमरीचयः ।
यस्य·············································॥
शैव(वं) पदं गते राज्ञि दृष्ट्वा यमुदितं प्रजाः ।
मुञ्चन्ति युगपद्बाष्पं शोकानन्दसमुद्भवे(वम्) ॥
·············································· ।
·············································· ॥
नवे वयसि वृत्तस्य यस्य राज्यभरोद्यतम् ।
चित्रायते कुमारस्य सैनान्यं मरुतामिव ॥
उपधाशुद्धिमा(न्) भृत्यस्तयोरवनिपालयोः ।
·············································· ॥
·············································· ।
·············································· ॥
हैमौ करङ्ककलशावित्यादिश्रियमुत्तमाम् ।
यो लब्धवान्प्रसादेन स्वामिनोरुभयोरपि ॥
न किंचित्स्वाम्यसंभुक्तमासं येन कदाचन ।
भोजन(नं) वसन·········यानाद्याभरणानि वा ॥

प्राणैरसारलघुभिः पितृपिण्डविवर्धितः ।
स्वामिनोऽर्थे गुरुस्थेयं केतुमैहत यो यमम्(?) ॥
लक्ष्म्या गाढोपगूढोऽपि पूर्वाभ्यासश(ब)लेन यः ।
मुनीनां चरितं धत्ते क्षमास(श)मपरायणः ॥
सुप्रकाशितशौर्यस्य सङ्ग्रामत्यागयोरपि ।
भीरुत्वं यस्य विख्यातमकीर्तेर्वृजिनादपि ॥
प्रीणयन्नुद्य········रुचं कुर्वन्द्विषामपि ।
पक्षद्वयं यो मित्रत्वमनयद्गुणसंपदा ॥
कलिदा(ना)वलीना(बलिना) धर्मो भग्नैकचरणोऽपि यम् ।
महास्तम्भमिवालम्ब्य चतुष्पादिव सुस्थितः ॥
अशाश्वतीत्यव(ना)दत्य तनुश्रियमिवात्मनः ।
यशःपुण्यमयीमेव यः स्थिरां बह्वमन्यत ॥
इदमुग्रपुराधीशः सुभक्त्या लिङ्गमैश्वरम् ।
प्रतिष्ठापितवानत्र श्रीमद्भद्रेश्वरसंज्ञकम् ॥
दासगोक्षेत्रहेमादिदेयद्रव्यमशेषव(तः ?) ।
प्रमाणमिह ते सन्तु यतयो देवयाजकाः ॥
बान्धवा यजमानस्य पुत्राः संबन्धिनोऽपि च ।
देवस्वं नोपभुञ्जीरन्न प्रमाणि (?) भवन्ति च ॥
यद्दत्तमस्मै देवाय यजमानेन भक्तितः ।
ये नरा हर्तुमिच्छन्ति ते यान्तु नरकं चिरम् ॥

(कम्बोज इन्स्क्रिप्शन्स् २४–२८)

---

## (५१)

## मल्लपुरस्थशिवालयप्रशस्तिः ।

संभवस्थितिसंहारकारणं वीतकारणः ।
भूयादत्यन्तकामाय जगतां काममर्दनः ॥

अमायश्चित्रमायोसावगुणो गुणभाजनः(नम्) ।
स्वस्थो निरुत्तरो जीयादनीशः परमेश्वरः ॥
यस्याङ्गुष्ठभराक्रान्तः कैलासः सदशाननः ।
पातालमगमन्मूर्ध्ना श्रीनिधिस्तं बिभर्त्यजम् ॥
भक्तिप्रह्वेण मनसा भवं भूषणलीलया ।
दोष्णा न यो मुदो भारं नीदात्स श्रीभरश्चिरम् ॥
अत्यन्तकामो नृपतिर्निर्जितारातिमण्डलः ।
ख्यातो रणजयः शंभोस्तेनेदं वेश्म कारितम् ॥
ज्ञः स्थाणुर्निष्कलः सोमः पावकात्मा वियद्वपुः ।
भीमः शिवो विजयतां शंकरः कामसूदनः ॥
गजराजो न विरसश्चक्रभृन्न जनार्दनः ।
तारकाधिपतिः स्वस्थो जयतात्तरुणाङ्कुरः ॥
श्रीमतोऽत्यन्तकामस्य द्विषद्दर्पापहारिणः ।
श्रीनिधेः कामरागस्य हराराधनसङ्गिनः ॥
अभिषेकजलापूर्णे चित्ररत्नाम्बुजाकरे ।
आस्ते विशाले सुमुखः शिरःसरसि शंकरः ॥
तेनेदं कारितं तुङ्गं धूर्जटेर्मन्दिरगृहम् ।
प्रजानामिष्टसिद्ध्यर्थं (शा)ङ्करीं भूतिमिच्छता ॥
धिक्तेषां धिक्तेषां पुनरपि धिग्धिग्धिगस्तु धिक्तेषाम् ।
येषां न वसति हृदये कुपथगतिविमोक्षको रुद्रः ॥

अत्यन्तकामपल्लवेश्वरगृहम् ।

(साउथ इण्डियन् इन्स्क्रिप्शन्स् १–४)

---

# (५२)

## चालुक्यवीरचोडमहीपतेर्दानपत्रम् ।

श्रीधाम्नः पुरुषोत्तमस्य महतो नारायणस्य प्रभो-
र्नाभीपङ्करुहाद्बभूव जगतः स्रष्टा स्वयंभूस्ततः ।

जज्ञे मानससूनुरत्रिरिति यस्तस्मान्मुनेरत्रितः
सोमो वंशकरः सुधांशुरुदितः श्रीकण्ठचूडामणिः ॥
तस्मादभूत्सुधासूतेर्बुधो बुधनुतेस्ततः ।
जातः पुरूरवा नाम चक्रवर्ती सविक्रमः ॥

तस्मादायुस्ततो नहुषः। ततो ययातिश्चक्रवर्ती वंशकर्ता । ततः पु ततो जनमेजयः ततः प्राचीशः ततः सैन्ययातिः ततो हयपतिः ततः सा भौमः ततो जनमेजयः ततो महाभौमः तस्मादैशानकः ततः क्रोधाननः त देवकिः तस्मादृभुकः तस्मादृक्षकः ततो मतिवरः सत्रयागयाजी सरस्वती॰ दीनाथः ततः कात्यायनः ततो नीलः ततो दुष्यन्तः तत्सुतः गङ्गायमुना रयोरविच्छिन्नान्निधाय यूपान् क्रमशः कृत्वा तथाश्वमेधं नाम महाकर्म भर इति योऽलभत । ततो भरताद्भूमन्युः । ततो हस्ती ततो विरोचनः । तस्म दजमील्हः ततः संवरणः ततः सुधन्वा ततः परिक्षित् ततो भीमसेनस्त प्रदीपनः ततः शंतनुः ततो विचित्रवीर्यः ततः पाण्डुराजः ततः पाण्डवाः

येनादाहि विजित्य खाण्डवमठो(थो) गाण्डीविना वज्रिणं
युद्धे पाशुपतास्त्रमन्धकरिपोश्चालाभि दैत्यान्बहून् ।
इन्द्रार्धासनमध्यरोहि जयिना यत्कालि(ल)केयादिका-
न्हत्वा स्वैरमकारि वंशविपिनच्छेदः कुरूणां विभोः ॥

ततोऽर्जुनादभिमन्युः ततः परिक्षित् ततो जनमेजयः ततः क्षेमुकः त नरवाहनः ततः शतानीकः तस्मादुदयनः ततः प्रभृतिष्वविच्छिन्नसंता नेष्वयोध्यासिंहासनासीनेष्वेकान्नषष्टिचक्रवर्तिषु गतेषु तद्वंश्यो विजय दित्यो नाम राजा विजिगीषया दक्षिणापथं गत्वा त्रिलोचनपल्लवमा क्षिप्य दैवदुरीहया लोकान्तरमगमत् । तस्मिन्संकुले पुरोहितेन वृद्धामा त्यैश्च सार्धमन्तर्वती(त्नी) तस्य महादेवी मुडिवेमुनामाग्रहारमुपगम्य तद्वा स्तव्येन विष्णुभट्टसोमयाजिना महामुनिप्रभावेन दुहितृनिर्विशेषमभिर क्षिता विष्णुवर्धनं नन्दनमसूत । सा तस्य कुमारस्य मानव्यसगोत्रहारी तिपुत्रद्विपक्षगोत्रक्रमोचितानि कर्माणि कारयित्वा तमवर्धयत् । स मात्रा विदितवृत्तान्तः सन्निर्गत्य चलुक्यगिरौ नन्दां भगवतीं गौरीमाराध

कुमारनारायणमातृगणांश्च संतर्प्य श्वेतातपत्रैकशङ्खपंञ्चमहाशब्दपालिकेतनप्रतिढक्कावराहलाञ्छनपिच्छकुन्तासिंहासनमकरतोरणकनकदण्डगङ्गायमुनादीनि स्वकुलक्रमागतानि निक्षिप्तानीव साम्राज्यचिह्नानि समादाय कड(द?)म्बगङ्गादिभूमिपान्निर्जित्य सेतुनर्मदामध्यं सार्धसप्तलक्षं दक्षिणापथं पालयामास ।

तस्यासीद्विजयादित्यो विष्णुवर्धनभूपतेः ।
पल्लवान्वयजाताया महादेव्याश्च नन्दनः ॥

तत्सुतः **पुलकेशिवल्लभः** तत्पुत्रः **कीर्तिवर्मा** तस्य तनयः स्वस्तिश्रीमतां सकलभुवनसंस्तूयमानमानव्यसगोत्राणां हारीतिपुत्राणां कौशिकीवरप्रसादलब्धराज्यानां मातृगणपरिपालितानां स्वामिमहासेनपादानुध्यातानां भगवन्नारायणप्रसादसमासादितवरवराहलाञ्छनेक्षणक्षणवशीकृतारातिमण्डलानामश्वमेधावभृथस्नानपवित्रीकृतवपुषां चालुक्यानां कुलमलंकरिष्णोः सत्याश्रयवल्लभेन्द्रस्य भ्राता **कुब्जविष्णुवर्धनो**ऽष्टादशवर्षाणि वेङ्गीदेशमपालयत् । तदात्मजो **जयसिंहवल्लभ**स्त्रिंशतम् । तदनुज **इन्द्रराजः** सप्तदिनानि । तत्सुतो **विष्णुवर्धनो** नववर्षाणि । तत्सूनुर्**मङ्गियुवराजः** पञ्चविंशतिम् तत्पुत्रो **जयसिंह**स्त्रयोदश तदवरजः **कोक्किलिः** षण्मासान् तस्य ज्येष्ठो भ्राता **विष्णुवर्धन**स्तमुच्चाट्य सप्तत्रिंशतम् तत्पुत्रो **विजयादित्यभट्टारको**ऽष्टादश । तत्तनुजो **विष्णुवर्धनः** षट्त्रिंशतम् तत्सुतो **नरेन्द्रमृगराजो**ऽष्टाचत्वारिंशतं तत्सुतः **कलिविष्णुवर्धनो**ध्यर्धं वर्षं तत्सुतो **गुणगाङ्कविजयादित्य**श्चतुश्चत्वारिंशतम् तद्भ्रातुर्विक्रमादित्यस्य तनयश्चालुक्यभीमस्त्रिंशतम् । तत्सुतः **कोल्लभिगण्डविजयादित्यः** षण्मासान् । तत्सुतोऽ**म्मराजः** सप्त वर्षाणि । तत्सुतं विजयादित्यं बालमुत्पाट्य **ताडपो** मासमेकम् । तं जित्वा चालुक्यभीमसुतो **विक्रमादित्य** एकादशमासान् । तत्ताडपराजसुतो **युद्धमल्लः** सप्त वर्षाणि । तमुच्चाट्य देशादम्मराजानुजो **राजभीमः** द्वादशवर्षाणि तत्सूनुर**म्मराजः** पञ्चविंशतिं तस्य द्वैमातुरो **दाननृप**स्त्रीणि वर्षाणि ततः सप्तविंशतिवर्षाणि दैवदुरीहया वेङ्गीमहिर-

नायिकाभवत्। ततो दानार्णवसुतः शक्तिवर्मभूपतिर्द्वादशवर्षाणि समरक्षदुर्वीम्।

ततस्तदनुजः सप्तसंवत्सरान्भूतवत्सलः[1]।
विमलादित्यभूपालः पालयामास मेदिनीम्॥

तत्तनयो नयशाली जयलक्ष्मीधाम राजराजनरेन्द्रः।
चत्वारिंशतमब्दानेकं च पुनर्महीमपालयदखिलाम्॥

यो रूपेण मनोभवं विशदया कान्त्या कलानां निधिं
भोगेनापि पुरंदरं विपुलया लक्ष्म्या च लक्ष्मीधरम्।
भीमं भीमपराक्रमेण विहसन्भाति स भास्वद्यशाः
श्रीमत्सोमकुलैकभूषणमणिर्दीनैकचिन्तामणिः॥

तस्यासीदपकल्मषा सुचरितैरम्मङ्गनाम्ना भुवि
प्रख्याता शुभलक्षणैकवसतिर्देवी जगत्पावनी।
या जह्नोरिव जाह्नवी हिमवतो गौरीव लक्ष्मीरिव
क्षीरोदाद्विवसेशवंशतिलकाद्राजेन्द्रचोडादभूत्॥

पुत्रस्तयोरभवदप्रतिघातशक्ति-
निःशेषितारिनिवहो महनीयकीर्तिः।
गङ्गाधराद्रिसुतयोरिव कार्तिकेयो
राजेन्द्रचोड इति राजकुलप्रदीपः॥

भासासुन्नतिहेतुं प्रथमं वेङ्गीश्वरत्वमध्यास्य।
यस्तेजसा दिगन्तानाक्रमदुदयं सहस्ररश्मिरिव॥

उद्यच्चण्डतरप्रतापदहनप्लुष्टाखिलद्वेषिणा
सर्वान्केरलपाण्ड्यकुन्तलमुखान्निर्जित्य देशान्क्रमात्।
आज्ञा मौलिषु भूभृतां भयरुजा चित्तेषु दुर्मेधसां
कीर्तिर्दिक्षु सुधांशुधामधवला येनार्पितोज्जृम्भते॥

भोगीशाभीलभोगप्रतिभयभुजनिर्भर्त्सनात्यन्तबिभ्य-
न्नानाभूपाललोकप्रहितबहुविधानर्घ्यरत्नाभिरामम्।

१. E. Hultzsch, Ph. D. महाशयेनैतत्स्कन्धकं गद्यान्तः पातितम्.

धत्ते मौलिं परार्घ्यो महति नृपकुले यः कुलोत्तुङ्गदेवो
देवेन्द्रत्वादनूने सुरपतिमहिमा चोडराज्येऽभिषिक्तः ॥
हस्तभ्राजितशङ्खचक्रजलजं यं राजनारायणं
लोक[ः] स्तौति स सूर्यवंशतिलकाद्राजेन्द्रदेवार्णवात् ।
संभूतां मधुरान्तकीर्ति विदितां नाम्ना परेण स्वयं
लक्ष्मीमुद्वहति स्म लोकमहितां देवीं चरित्रोन्नताम् ॥
गाङ्गौघा इव निर्मलाः कृततमोध्वंसा दिनेशा इव
क्षोणीशा इव भूभरश्रमसहा जातास्तयोः सूनवः ।
तन्मध्ये नयविक्रमैकनिलयः श्रीराजराजं प्रति
प्रेम्णा वाचमिमामवोचत पिता सर्वोर्वराधीश्वरः ॥
मया वेङ्गीमहाराज्यं चोडराज्याभिलाषिणा ।
मत्पितृव्ये पुरा न्यस्तं विजयादित्यभूभुजि ॥
स च पञ्चदशाब्दानि पञ्चाननपराक्रमः ।
महीं रक्षन्महीनाथो दिवं देवोपमो गतः ॥
इत्युक्त्वा तां धुरं दत्तां गुरुणा चक्रवर्तिना ।
अनिष्टतद्वियोगोऽपि विनीतो वहति स सः ॥
श्रीपादसेवासुखतो गुरूणां न जातु राज्यं सुखमित्यवेक्ष्य ।
संरक्ष्य वेङ्गीभुवमेकमब्दं भूयः स पित्रोरगमत्समीपम् ॥
तदनुजमथ धीरं वीरचोडं कुमारं
गुणमिव तनुबद्धं विक्रमं चक्रवर्ती ।
उदयमिव रविस्त्वं प्राप्य वेङ्गीश्वरत्वं
वितनु शिरसि पादं भूभृतामित्यवोचत् ॥
इत्याशिषं समधिगम्य नृपादवन्ध्यां
देव्यास्तथाग्रजनृपद्वितयात्क्रमेण ।
आनम्य तानवनतोवरजैः कुमारः
सृष्टः स्वदेशगमनाय स तैः कथंचित् ॥

शत्रुध्वान्तमपास्य राजनिकरानाच्छाद्य धाम्ना परा-
न्दुर्वृत्तान्विनिवर्त्य भूकमलिनीं कृत्वा तथानन्दिनीम् ।
आरूढो जभनाथ(?)नामनगरीहर्म्योदयाद्रिं विभु-
र्वेङ्गीभूतलभूषणं नृपसुतो बालार्कबिम्बद्युतिः ॥
शाकाब्दे शशिखद्वयेन्दु(१००१)गणिते सिंहाधिरूढे रवौ
चन्द्रे वृद्धिमति त्रयोदशतिथौ वारे गुरोर्वृश्चिके ।
लग्नेऽथ श्रवणे समस्तजगतीराज्याभिषिक्तो मुदा
लोकस्योद्वहति स पट्टमनघः श्रीवीरचोडो नृपः ॥

स सर्वलोकाश्रयश्रीविष्णुवर्धनमहाराजो राजपरमेश्वरः परममाहेश्वरपर-भट्टारकः परमब्रह्मण्यश्रीवीरचोडदेवः गुद्दवाटिविषयनिवासिनो राष्ट्र प्रमुखान् कुटुम्बिनः सर्वान् समाहूय मन्त्रिपुरोहितसेनापतियुवराजदौव रिकसमक्षमित्थमाज्ञापयति—

यथा—

पावने ब्रह्मवंशेऽभूत्परमाह्लाददर्शनः ।
मुनीन्द्रो मुद्गलो नाम क्षीरोद इव चन्द्रमाः ॥
येनातर्क्यानुभावेन समाहूते दिवाकरे ।
यस्य यष्टिः समादिष्टा रविचेष्टामचेष्टत ॥
आसीत्पवित्रचारित्रस्तद्गोत्रे गोत्रवर्धनः ।
दिशो निजयशोधाम्ना द्योतयन्पोतनाह्वयः ॥
गुणाधिको गुणज्ञेन राजराजाधिपेन यः ।
राजराजब्रह्ममहाराजनाम्ना स्तुतो मुदा ॥
तस्य पुण्यनिधेः पत्नी कन्नमाम्बा जगन्नुता ।
अत्रेरिवानसूयासीदनसूयगुणोन्नता ॥
सुतमिव वसुदेवाद्देवकी वासुदेवं
गुहमिव गिरिकन्या नन्दनं चन्द्रमौलेः ।
अथ तनयमसूत श्रीनिधिं सा च तस्मा-

दखिलविबुधसंघैरीडितं भेडमार्यम् ॥
उद्दामधामविमलीकृतदिग्विभागे
नित्योदयस्थितिमति प्रविकासिपद्मे।
यत्रोदिते निखिलबन्धुकुलानि लक्ष्मी-
रध्यास्त वारिजवनानि विवस्वतीव ॥
यस्मिन्नाश्रितवत्सले कृतयुगाचारैकधीरे स्थितिं
बिभ्राणा गुणरत्नभूषण इति प्रख्यातनाम्नि स्वयम्।
सत्यत्यागपराक्रमप्रभृतयः संभूय सर्वे गुणा
वर्धन्ते गुणराशिलोपनिपुणं निर्जित्य कालं कलिम् ॥
धीरो नित्यानुरक्तो दृढनिशितमतिर्ब्रह्मवंशप्रदीपो
लक्ष्मीभूरिद्धतेजा नयविनयनिधिः शास्त्रशस्त्रप्रवीणः।
मान्यः शैलेन्द्रसारस्थिर इति च मया सादरं सप्रसादं
सेनापत्येऽभिषिक्तो वहति जनमुदे पट्टमारोपितं यः ॥
शुश्रूषया गुरुजनं चरितेन लोकं
मानेन बन्धुजनमिष्टधनेन शिष्टान्।
यो माम्मदीयनिखिलक्षितिराज्यभार-
क्षान्त्याभिनन्दयति भक्तिभरेण शौरिम् ॥
यस्य प्राङ्गणभूमिषु प्रतिदिनं प्रक्षाल्यमानामित-
क्षोणीदेवसमूहपादविगलद्वारिप्रवाहैः शुभैः।
शश्वन्मार्गसहस्रपूरिभिरहो गङ्गाप्रवाहा जिता
देवेष्वन्यतमस्य पादगलिता मार्गत्रयायासिताः ॥
द्राक्षारामे पावने पुण्यभाजा पुण्यक्षेत्रे पीठपुर्यां च येन।
भोक्तुं प्रीत्या प्रत्यहं ब्राह्मणानामाकल्पान्तं कल्पितं सत्रयुग्मम् ॥
चेब्रूरुनामप्रथिताभिरामशिष्टाग्रहारोत्तरदिग्विभागे।
महत्तटाकं मधुराम्बुपूर्णमचीकरद्यः करुणारसात्मा ॥
विप्रैरगस्त्यप्रतिमैरसंख्यैर्नित्योपभोग्येन शशिप्रभेण।
यद्वारिणाब्धिं हसतीव भूयो निःशेषपीतं कलशोद्भवेन ॥

महौजसा तेन महामहिम्ना ग्रामस्य तस्यापरदिग्विभागे ।
निर्मापितं धर्मपरायणेन विष्णोर्गृहं वैष्णवपुंगवेन ॥
समुन्नते चन्द्रमरीचिगौरे लक्ष्मीनिवासे नयनाभिरामे ।
तत्राविरासीत्स्वयमेव देवो लक्ष्मीपतिर्लक्षितशङ्खचक्रः ॥

तस्मै श्रीविष्णुभट्टारकाय प्रत्यहं चरुबलिपूजार्थं खण्डस्फुटितनवकर्मार्थं च भवद्विषये कोलारू नाम ग्रामः सर्वकरपरिहारेण देवभोगीकृत्य उदकपूर्वकं दत्त इति विदितमस्तु वः अस्य ग्रामस्य सीमानः पूर्वतः कु..........................................सीमा ॥ अस्योपरि न केनचिद्बाधा कर्तव्या । यः करोति स पञ्चमहापातकयुक्तो भवति । तथा चोक्तं भगवता व्यासेन—

स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिं वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
गामेकां स्वर्णमेकं वा भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥
बहुभिर्वसुधा भुक्ता बहुभिश्चानुपालिता ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

श्रीविजयराज्यसंवत्सरे एकविंशे दत्तस्यास्य शासनस्याज्ञप्तिः पञ्चप्रधाना काव्यकर्ता विद्द्यभट्टः लेखकः पेन्नाचारिः ॥

(साउथ इण्डियन् इन्स्क्रिप्शन्स् १।५३-५७)

---

## ( ५३ )

## चालुक्यविष्णुवर्धनमहाराजदानपत्रम् ।

सर्वाकारमशेषस्य जगतः सर्वदा शिवम् ।
गोब्राह्मणनृपाणां च शिवं भवतु सर्वदा ॥

स्वस्ति श्रीमतां सकलभुवनसंस्तूयमानमानव्यसगोत्राणां हारीतीपुत्राणां कौशिकीवरप्रसादलब्धराज्यानां मातृगणपरिपालितानां स्वामिमहासेनपादा-

नुध्यातानां भगवन्नारायणप्रसादसमासादितवरवराहलाञ्छनेक्षणक्षणवशीकृ-तारातिमण्डलानां अश्वमेधावभृथस्नानपवित्रीकृतवपुषां चलुक्यानां कुलमलं-करिष्णुः सत्याश्रयवल्लभस्य भ्राता कुब्जविष्णुवर्धनोऽष्टादशवर्षाणि । तत्पुत्रो जयसिंहवल्लभस्त्रयस्त्रिंशद्वर्षाणि । तद्भ्रातुरिन्द्रराजनन्दनो विष्णु-वर्धनः नववर्षाणि । तत्पुत्रो मङ्गियुवराजः पञ्चविंशतिसंवत्सरान् । तत्सूनु-र्जयसिंहस्त्रयोदश वत्सरान् । तद्वैमातुरानुजः कोक्किलिः षण्मासान् । तद-ग्रजो विष्णुराजः स्वानुजमुच्चाट्य सप्तत्रिंशत्संवत्सरान् तत्पुत्रो विजया-दित्यभट्टारकः अष्टादशाब्दान्। तन्नन्दनो विष्णुवर्धनः षट्त्रिंशदब्दान्। तत्पुत्रः

गङ्गरट्टबलैः सार्धं द्वादशाब्दानहर्निशम् ।
भुजार्जितबलं खङ्गसहायो नयविक्रमैः ॥
अष्टोत्तरं युद्धशतं युद्ध्वा शंभोर्महालयान् ।
तत्संख्ययाकरोद्वीरो विजयादित्यभूपतिः ॥
कृत्वा राज्यं स वेङ्गीशः स चत्वारिंशतः समान् ।
चतुरुत्तरसंख्यातान्ययौ सख्यं शचीपतेः ॥ ४ ॥
तत्सूनुर्नयविद्वीरः कलुयादिर्विष्णुवर्धनः ।
वेङ्गीनाथः समस्तानामायुधानां कलौ कृती ॥
वर्णाश्रमस्थितिनियोजनदक्षरक्षा-
शिक्षापरः परपुरंजयसक्तबाहुः ।
नित्यं त्रिवर्गपरिपालनतन्त्रिमन्त्रि-
संवर्धिताखिलधरातललब्धतेजाः ॥
गजवाजियुद्धकुशलः सार्धसंवत्सरं पतिः ।
बभूव राज्ये नयविदभिषिक्तः कुलोन्नतेः ॥
तत्सुतोऽजनि समस्तभूभृतां शासकः सकलसंपदां पतिः ।
धैर्यदानधृतिधर्मनिर्मलश्रीप्रतापधरमूर्तिविश्रुतः ॥
समरनिरताराातिव्रातानानेकधरेश्वरा-
न्प्रकृतिबलसंपन्नस्तेजस्ततिक्रमजोन्नतिः ।

विलसदसिना जित्वा सूर्यं प्रतापयशोमयै-
जगति विजयादित्यो नित्यं गुणैश्च जिगाय सः ॥

गङ्गानङ्गजवैरिशक्तिरसमान्रट्टेशसंचोदितो
जित्वा मङ्गिशिरोहरद्युधि महाबाह्वाप्तवीर्योर्यमा।
कृष्णं संकिलमङ्कितास्विलबलप्राप्तोरुसद्विक्रमो
भीतार्तौ च विधाय तत्पुरमरं यो निर्ददाह प्रभुः ॥

स समस्तभुवनाश्रयश्रीविजयादित्यश्चतुश्चत्वारिंशद्वर्षाणि। तदनु सवितर्यस्तं गते तिमिरपटलेनेव रट्टदायादबलेनाभिव्याप्तं वेङ्गीमण्डलम् तदनुजविक्रमादित्यसूनुश्चलुक्यभीमाधिपो द्रोहार्जुनापरनामा स्वविक्रमैकसहायतरवारिप्रभयावभास्याधिपतिरभूत् किं च दीनानाथनग्ननटगायकधर्मध्वजवृत्तीनां पितराविव सखेव गुरुरिवाभिलषितं वित्ती(ती)र्य कल्पतरुप्रतिमश्चेतांसि दानेन संतर्प्य त्रिंशद्वर्षाणि पालयित्वात्मगुणैः पुरंदरमानन्दयन्निव तत्सख्यमगमत्।

तत्पुत्रो विजयादित्यः शैशवाल्लब्धसंपदा।
सर्वं भोगाधिराज्याङ्कबलरत्नैरविश्रुतः ॥

जीवत्येव प्रतापात्पितरि भुजबलध्वस्ततद्वैरिवर्गः
पश्चाज्जित्वारिवर्गं निजमन्त्रितमहाशक्तिसंपन्नमन्त्रः।
प्रज्ञाचक्रेण बाह्यां रिपुसमितिमपि स्वार्थभोगैः कृतार्थो
राज्याशीर्लब्धतेजाः समदल(बल?)मधिपो जेतुमिन्द्रं प्रयातः ॥

तत्सूनुरुदयादित्य इवाम्भो राजमहेन्द्रापरनामा रिपुतिमिरमारान्निहत्य प्रकृतिसपत्नपक्षनिक्षिप्तसामन्तकुल्यकुटिलमनोभङ्गकरं करवालमुत्कृष्य शक्तित्रयसंपन्नप्रतापावर्जितपितृपितामहप्रकृतिबलः प्रज्ञया सुरगुरुं तेजसा भानुमन्तं क्षमया क्षमाममरगिरिं विविध(वि)बुधसमाश्रयतयानुकुर्वन् सर्वलोकाश्रयश्रीविष्णुवर्धनमहाराजः स्वराज्याभिषेककृतकल्याणः सिंहासनारूढः कण्डेरुवाडिविषयनिवासिनः सर्वान्कुटुम्बिनः समाहूयेत्थमाज्ञापयति स। अस्मत्कुलकल्याणपरम्परानियोगाधिकृतपट्टवर्धनी वंशाग्रण्या। कल्ल-

कम्प इति विश्रुतेन कुब्जविष्णुवर्धनानुचरेण संग्रामे तदनुज्ञया दुर्धर्षबलं दद्दरनामानं विनिहत्य तच्चिह्नानि येन जगृहिरे । तत्कुलप्रसूतसोमादित्यस्य सूनुरनेकयुद्धलब्धप्रतापः प्रतिवियराजः ।

तत्सूनुः सकलारातिमदच्छेदकरायुधः ।
सेवको विजयादित्यकलियर्त्यङ्कभूभुजः ॥
अभैपुर्मण्डनादित्यं दृष्ट्वा प्रतिमुखाञ्जनम् ।
प्रासमुज्ज्वलगण्डाङ्कं यं परे यमसंनिभम् ॥

यो हि—

शत्रूणां तुमुलेषु वीरपटहं संश्राव्य जित्वा बलं
कुन्तादित्य इति श्रुताङ्कितमहाकीर्तिप्रतापालयः ।
मच्चित्तं परितोष्य भृत्यपदवीं लब्ध्वा प्रसादं गतः
स्फीतानेकबलारिभूपविजयश्रीजन्मबाहून्नतिः ॥

तस्मै सद्वादशग्रामटिको गोण्टूरुनामग्रामः सर्वकरपरिहारीकृत्यास्माभिर्दत्त इति विदितमस्तु वोऽस्माभिः । अस्यावधयः । पूर्वतः गोङ्गुव । दक्षिणतः गोणयूरु । पश्चिमतः कुलुचेरुवुलु । उत्तरतः मडपल्लि । एतेषां मध्यवर्तिनः क्षेत्रसीमानः । पूर्वतः पोतुरायु । आग्नेयतः पेद्दकोयिलमु । दक्षिणतः कुरुवपोटि । नैर्ऋततः पेरुवातिकुरुव । पश्चिमतः पालगुण्ट पञ्चमटिकट्ट । वायव्यतः पोलकुंगोण्ड मोनदुर्ग भधवति । उत्तरतः मडपल्लिपर्रु । ऐशानतः चामिरे निगुण्ट । अस्योपरि न केनचिद्बाधा कर्तव्या । यः करोति स पञ्चमहापातको भवति । तथा च व्यासेनोक्तम्—

बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यो हरेत्तु वसुंधराम् ।
षष्टिं वर्षसहस्राणि विष्ठायां जायते कृमिः ॥

(साउथ इण्डियन् इन्स्क्रिप्शन्स् ३९-४१.)

---

## ( ५४ )

## श्रीबदरिकाश्रमयात्रान्तर्गतपण्डकेश्वर-मन्दिरोपलब्धदानपत्रम्।

स्वस्ति श्रीमत्कार्तिकेयपुरात्सकलामरदितितनुजमनुजविभुभक्तिभावभरभारानमितामितोत्तमाङ्गसङ्गिविकटमुकुटकिरीटविटङ्ककोटिकोटिशोलोकतानाना(ताता)यकप्रदीपदीपदीधितिपानमदरक्तचरणकमलामलविपुलबहुलकिरणकेशरासारसारिताशेषविशेषमोषिघनतमतेजसः स्वर्धुनीधौतजटाजूटस्य भगवतो धूर्जटेः प्रसादान्निजभुजोपार्जितोर्जित्यनिर्जितरिपुतिमिरलब्धोदयप्रकाशदयादाक्षिण्यसत्यसत्त्वशीलशौचशौर्यौदार्यगाम्भीर्यमर्यादार्यवृत्ताश्चर्यकार्यवर्यादिगुणगणालंकृतशरीरो महासुकृतिसंतानबीजावतारः कृतयुगागमभूपाललितकीर्तिर्नन्दाभगवतीचरणकमलकमलासनाथमूर्तिः **श्रीमिम्वरः**, तस्य तनयस्तत्पादानुध्यातो राज्ञीमहादेवी **श्रीनाशूदेवी**, तस्यामुत्पन्नः परममाहेश्वरः परब्रह्मण्यः शितकृपाणधारोत्कृत्तमत्तेभकुम्भाकृष्टमुक्तावलीयशःपताकाच्छायचन्द्रिकापहसिततारागणः परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमदिष्टगणदेवः, तस्य पुत्रस्तत्पादानुध्यातो राज्ञी महादेवी **श्रीवेगदेवी**, तस्यामुत्पन्नः परममाहेश्वरः परमब्रह्मण्यः कलिकलङ्कपङ्कातङ्कमग्नधरण्युद्धारधारितधौरेयवरवराहचरितः सहजमतिविभवविभुविभूतिस्थगितारातिचक्रप्रतापदहनोऽतिवैभवसंहारारम्भसंभृतभीमभ्रुकुटिकुटिलकेसरिसटाभीतभीतारातीभकलभभरोऽरुणारुणकृपाणबाणगुणप्राणगणहठाकृष्टोत्कृष्टसलीलजयलक्ष्मीप्रथमसमालिङ्गनावलोकनवलक्ष्यसखेदसुरसुन्दरीविधूतकरस्खलद्वलयकुसुमप्रकरप्रकीर्णावतंससंवर्धितकीर्तिबीजः पृथुरिव दोर्दण्डसाधिताधनुर्मण्डलबलावष्टम्भवशावशीकृतगोपालनानिश्चलीकृतधराधरेन्द्रः परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीपल्लवितशूरदेवः कुशली अस्मिन्नेव श्रीमत्कार्तिकेयपुरविषये समुपगतान्सर्वानवनियोगस्थान् राजराजत(न्य)कराजपुत्रास्मृष्टामात्यसामन्तमहासामन्तठक्कुरमहामनुष्यमहाकर्तृकृतिकमहाप्रतीहारमहादण्डनायकमहाराजप्रमातारशरभङ्गकुमारामात्यापरिकदुःसाध्यासाध-

निकदशापराधिकचौरोद्धरणिकशौल्किकशौल्मिकतदायुक्तकविनियुक्तकप-
ट्टाकापचारिकाशेषभङ्गाधिकृतहरत्यश्वोष्ट्रबलव्यापृतकभूतप्रेषणिकदण्डिकद-
ण्डपाशिकगमागमिकशार्ङ्गिकाभित्वरमाणकराजस्थानीयविषयपतिभोगपति-
नरपत्यश्वपति""""ण्डरक्षप्रतिशूरिकस्थानाधिकृतवर्त्मपालकोट्टपालघट्टपाल-
क्षेत्रपालप्रान्तपालकिशोरवर(ड)वागोमहिष्यधिकृतभट्टमहत्तमाभीरवणिक्श्रे-
ष्ठिपुरोगास्त(?)ष्टादशप्रकृत्यधिष्ठानीयान्खषकिरातद्रविडकलिङ्गशौरहूणोड्र-
मेदान्ध्रचाण्डालपर्यन्तान्सर्वसंवसान्समस्तजनपदान्भटाचटसेवकादीनन्यांश्च
कीर्तितानकीर्तितानस्मत्पादोपजीविनः प्रतिवासिनश्च ब्राह्मणोत्तरान्यथार्हं
मत्तयति बोधयति समाज्ञापयति—अस्तु तेऽस्माद्विदितम्—उपरिनिर्दि-
ष्टविषये गोरुन्नसायां प्रतिबद्धखषियाकपरिभुज्यमानपल्लिका, तथा पणि-
भूतिकायां प्रतिबद्धगुग्गुलपरिभुज्यमानपल्लिकाद्वयं एते मया मातापित्रो-
रात्मनश्च पुण्ययशोभिवृद्धये पवनविघट्टिताश्वत्थपत्रवच्चलतरङ्गजीवलोकम-
वलोक्य जलबुद्बुदाकारमसारं वायुर्दृष्ट्वा गजकलभकर्णाग्रचपलतां चालक्ष्य
""""त्वापरलोकनिःश्रेयसार्थं संसारोत्तरणार्थं च पुण्येऽहनि उत्तरायण-
संक्रान्तौ गन्धपुष्पधूपदीपोपलेपननैवेद्यबलिचरुनृत्यगेयवाद्यसत्त्वादिप्रवर्त-
नाय खण्डस्फुटितसंस्करणाय अभिनवकर्मकरणाय च भृत्यपदमूलभरणाय च
गोरुन्नसायां महादेवीश्रीसामदेव्या स्वयंकारायितभगवते **श्रीनाराय-
णभट्टारकाय** शासनदानेन प्रतिपादिताः । प्रकृतिपरिहारयुक्तः प्रचा-
टाभटाप्रवेशः अकिंचित्प्रग्राह्यः, अनाच्छेद्य आचन्द्रार्कक्षितिस्थितिसमका-
लिको विषयादुद्धृतपिण्डास्थसीमागोचरपर्यन्तस्य वृक्षारामः, हृ(ह्र)दप्रस्रव-
णोपेतदेवब्राह्मणभुक्तभुज्यमानवर्जिताः । यतः—सुखं पारम्पर्येण परि-
भुञ्जतश्चास्योपरिनिर्दिष्टैरन्यतरैर्वा धरणविधारणपरिपन्थिजनादिकोपद्रवो
मनागपि कर्तव्यो नोऽन्यथा""""महान्द्रोहः स्यादिति प्रवर्धमानविजयरा-
ज्यसंवत्सर एकविंशति[त]मे । सम्वत् २।१ माघवदि ३। महादानाक्षयपट-
लाधिकृत**श्रीपोजकः** । लिखितमिदं महासंधिविग्रहाक्षपटलाधिकृतश्रीम-
दायटावनातङ्कोत्कीर्ण**श्रीगङ्गभद्रेण** ।

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्टिं वर्षसहस्राणि श्वविष्ठा जायते कृमिः॥
भूमेर्दाता याति लोके सुराणां हंसैर्युक्तं यानमारुह्य दिव्यम्।
लौहे कुम्भे तैलपूर्णे सुतप्ते भूमेर्हर्ता पच्यते कालदूतैः॥
षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥
गामेकां च सुवर्णं च भूमेरप्येकमङ्गुलम्।
हृत्वा नरकमायाति यावदाभूतसंप्लवम्॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत॥
..............भ्रममिदं समुदाहरद्भि-
र्न्यैश्च दानमिदमभ्यनुमोदनीयम्।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
दानं फलं परयशःपरिपालनं च॥
इति कमलदलबिन्दुलोलमिदमनुचिन्त्य मनुष्यजीवितं च।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः॥

नोट्स् ऑन् धिं हिस्टरी ऑफ् धि हिमालय—एट्किन्सन्.

---

(५५)

## सुप्रसिद्धश्रीवीरबुक्करायसुतहरिहरमहाराजस्य दानपत्रम्।

श्रीगणाधिपतये नमः।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शंभवे॥

अव्याद्व्याहतैश्वर्यैकारणं वारणाननः ।
वरदस्तीव्रतिमिरमिहिरो हरनन्दनः ॥
श्रीमानादिवराहो यः श्रियं दिशतु भूयसीम् ।
गाढमालिङ्गिता येन मेदिनी यत्र मोदते ॥
अस्ति कौस्तुभकल्पद्रुकामधेनुसहोदरः ।
रमानुजः सुधानाथः क्षीरसागरसंभवः ॥
उदभूदन्वये तस्य यदुर्नाम महीपतिः ।
पालितं यत्कुलीनेन वासुदेवेन भूतलम् ॥
अभूदस्य कुले श्रीमान्भूमौ गुरुगुणोदयः ।
अपास्तदुरितासङ्गः संगमो नाम भूपतिः ॥
आसन्हरिहरः कम्पो बुक्करायमहीपतिः ।
मारपो मुद्गपश्चेति कुमारास्तस्य भूपतेः ॥
पञ्चानां दृप्तगात्राणां प्रख्यातो बुक्कभूपतिः ।
प्रसिद्धविक्रमो मध्यः पाण्डवानामिवार्जुनः ॥
दिक्करीन्द्रधुराधारादक्षिणस्कन्धबन्धुरः ।
बुक्करायस्ततः श्रीमानासीदाहवकर्कशः ॥

यस्योद्यद्युद्धरङ्गे वितरति परितस्ताण्डवं मण्डलाग्रे
वक्रे शुष्कास्तुरुष्का भयभरभरितः कोङ्कणः शङ्कितायुः ।
सान्ध्रा रन्ध्राणि धावन्त्यधमनतनया गुर्जरा जर्जराङ्गाः
काम्बोजाः स्विन्नधैर्याः सपदि समभवन्प्राप्तभङ्गाः कलिङ्गाः ॥

राजाधिराजस्तेजस्वी यो राजपरमेश्वरः ।
भाषातिरिङ्गिभूपालभुजंगमविहंगराट् ॥
राजवेश्याभुजङ्गो यः परराय‍तपंकरः ।
हिन्दुरायसुरत्राणः शास्त्रेत्यादिभिरन्वितः ॥
श्रीविद्यानगरी विश्वविजयोदयशालिनी ।
राज्ञा विजयिना येन राजधानी कृता स्थिरा ॥

तस्य गौराम्बिका नाम महिषी समजायत।
माननीयगुणा मायावल्लभस्य यथा रमा॥
कपर्दिनो यथा गौरी शचीव नमुचिद्विषः।
पितामहस्य सावित्री छायेव द्युमणेरिव॥
विलासविभ्रमोल्लासतिरस्कृततिलोत्तमा।
अनसूयापि सासूया यत्पातिव्रत्यसंपदा॥
अहीनभोगसंपत्तिरसौ राजशिखामणिः।
तस्यां हरिहरं गौर्यां कुमारमुदपादयत्॥
शिष्टान्संरक्षिता यश्च दुष्टानामपि शासकः।
लब्धास्तो विदुषा साकं श्लाघ्यो हरिहरे परः॥
यस्मिन्षोडशदानानि(नां) यशसा परिशोभिते।
दानाम्बुधारया यस्य वर्धते धर्मपादपः॥
ऋषिभूवह्निचन्द्रे(१३१७)तु गणिते धात(तृ)वत्सरे।
माघमासे शुक्लपक्षे पौर्णमास्यां महातिथौ॥
नक्षत्रे पितृदैवत्ये भानुवारेण संयुते।
तुङ्गभद्रानदीतीरे हेमकूटोपशोभिते॥
श्रीविरूपाक्षदेवस्य संनिधौ शुभदायिने।
भारद्वाजसगोत्राय बह्वृचोऽग्रेसराय च॥
वाचस्पतेर्भिलाख्यस्य सूनवे सूनृतोक्तये।
पटवर्धनिने विष्णुदीक्षितेन्द्राय धीमते॥
वसिष्ठगोत्रजायापस्तम्बशाखाग्रयायिने।
रामभट्टसुतानन्तदीक्षिताय विपश्चिते॥
प्रसिद्धपाण्डवाक्रान्तरुचङ्गिस्थलवासिने।
भिलिचन्द्राभिधासीमामध्ये ख्यातं महोदयम्॥
पूर्वभागे स्थितं ग्रामादरिसीकेरसंज्ञकात्।
गडिकेहल्याभिधाद्ग्रामाद्दक्षिणां दिशमाश्रितम्॥

ग्रामात्पल्लवकटाख्यात्प्रतीच्याभिमुखाश्रितम् ।
ग्रामाच्च भूदिहल्याख्यादुत्तरस्यां दिशि श्रितम् ॥
प्रतिनाम्ना समाख्यातं पुरं हरिहराभिधम् ।
मादेनहल्लीतिग्रामं सर्वसस्यसमन्वितम् ॥
सर्वमान्यं चतुःसीमासंयुतं च समन्ततः ।
निधिनिःक्षेपपाषाणसिद्धसाध्यसमन्वितम् ॥
अक्षिण्यागामिसंयुक्तं द्विभोग्यं रम्यभूरुहम् ।
वापीकूपतडागैश्च कच्छेनापि समन्वितम् ॥
पुत्रपौत्रादिभिर्भोग्यं क्रमादाचन्द्रतारकम् ।
सर्वस्याधमनस्यापि विक्रयस्यापि चोचितम् ॥
परीतं प्रयतैः स्निग्धैः पुरोहितपुरोगमैः ।
त्रिविधैर्विबुधैः श्रीतोपयिकैरपिकेगिरा ॥
वीरो हरिहरश्चाभून्माननीयो मनस्विनाम् ।
भूदानपात्रभूतात्मा भूसुरात्मा विशेषतः ॥
सहिरण्यपयोधारापूर्वकं दत्तवान्मुदा ।
........................................ ॥

इदमखिलराजशासनमधुकरकाकारगीतमहात्मनः ।
राज्ञो हरिहरनृपतेः शासनमचलैकपारिजातस्य ॥
तस्य तच्छासनेनैव शासनं तु विनिर्मितम् ।
शासनाचार्यधर्मेण वाणिदेवेन शिक्षितम् ॥
अस्मिन्ग्रामेऽष्टदिक्षु सीमा देशभाषया लिखिता ॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम् ॥
स्वदत्ताद्द्विगुणं पुण्यं परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥

एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।
न भोज्या न करग्राह्या विप्रदत्ता वसुंधरा ॥
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ॥

लाइफ् एण्ड एसेज् आफ् एच्. टी. कोलब्रूक.
वाल्यूम २ पेज २३२ ।

---

# (५६)

## श्रीलक्ष्मीवर्मदेवानां शासनपत्रम् ।

(उज्जयनीप्रान्त उपलब्धम् ।)

जयति व्योमकेशोऽसौ यः सर्गाय बिभर्ति ताम् ।
ऐन्दवीं शिरसा लेखां जगद्बीजाङ्कुराकृतिम् ॥
तन्वन्तु वः स्मरारातेः कल्याणमनिशं जटाः ।
कल्पान्तसमयोद्दामतडिद्वलयपिङ्गलाः ॥

परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीउदयादित्यदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीनरवर्मदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीयशोवर्मदेवपादानुध्यातसमस्तप्रशस्तोपेतसमधिगतपञ्चमहाशब्दालंकारविराजमानमहाकुमारश्रीलक्ष्मीवर्मदेवः श्रीमहाद्वादशकमण्डले श्रीराजशासनभोगे सुरासणीसंबद्धवडनुदग्रामतस्रासुवर्णप्रासादिकासंबद्धउथवणकग्रामयोः समभूतिषयिक(समस्तविषयिक)पट्टकिलजनपदादीन्ब्राह्मणोत्तरान्बोधयति—अस्तु वः संविदितम्—यथा श्रीमद्धारायां महाराजाधिराजपरमेश्वरश्रीयशोवर्मदेवेन श्रीविक्रमकालातीतसंवत्सरैकनवत्यधिकशतैकादशेषु कार्तिकशुदि अष्टम्यां संजातमहाराजश्रीनरवर्मदेवसांवत्सरिके तीर्थाम्भोभिः स्नात्वा देवऋषिमनुष्यपितॄंस्तर्पयित्वा भगवन्तं भवानीपतिं समभ्यर्च्य शमीकुशतिलान्नाद्याहुतिभिर्हिरण्यरेतसं हुत्वा भानवे

अर्घ्यं विधाय कपिलां त्रिः प्रदक्षिणीकृत्य संसारस्यासारतां दृष्ट्वा नलिनी-दलगतजलवत्तरलतरं जीवितं धनं चावेक्ष्य, उक्तं च—

'वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥'

एवमाकलय्य अद्रेलवद्धावरिस्थानविनिर्गतभरद्वाजगोत्राय भरद्वाजाङ्गिर-सबार्हस्पत्यत्रिप्रवरायाश्वलायनशाखिने दक्षिणायातकर्णाटब्राह्मणद्विवेदठक्कुर-श्रीमहिरस्वामिपौत्रश्रीविश्वरूपसुत आवसथिकश्रीधनपालाय उपरि-लिखितवडउदग्रामउथवणकग्रामौ सवृक्षमालाकुलौ निधिनिक्षेपसहितौ वा-पीकूपतडागान्वितौ चतुष्कण्टकविशुद्धौ चन्द्रार्कयावदुदकपूर्वकतया शा-सनेन प्रदत्तौ । संवत्सरशतद्वादशकेषु श्रावणशुदि पञ्चदश्यां सोमग्रहणप-र्वणि श्रीमत्पितृश्रेयोर्थं पुनरेवास्माभिरेतौ ग्रामौ उदकपूर्वकतया शासनेन प्रदत्तौ । तदनयोर्ग्रामयोर्निवासिसमस्तपट्टकिलादिलोकैस्तथा कर्षकैश्च यथो-त्पद्यमानकरहिरण्यभागभोगादिकमाज्ञाश्रवणविधेयैर्भूत्वा सर्वममुष्मै समुपने-तव्यम् । सामान्यं वै तत्पुण्यफलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभूपतिभिर्ध-र्मादायोऽयं मन्तव्यश्चेति । यतः—

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिवर्षसहस्राणि विष्टायां जायते कृमिः ॥

सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसे………………………………………… ।

(अग्रे सर्वं त्रुटितम्)

रॉयल् एशियाटिक् सोसाय्टी वा. १ पे. ३८२ ।

———

# (५७)

# श्रीमदमोघवर्षदेवापराभिधानश्रीमद्वाक्पतिराजदेवानां शासनपत्रम् ।

ॐम्

य: स्फूर्जत्फणभृद्विषानलमिलद्धूम्रप्रभाः प्रोल्लस-
न्मूर्धाबद्धशशाङ्ककोटिघटिता याः सैंहिकेयोपमाः ।
याश्चाद्रिरिजाकपोलललिताः कस्तूरिकाविभ्रमा-
स्ताः श्रीकण्ठकठोरकण्ठरुचयः श्रेयांसि पुष्णन्तु वः ॥
यल्लक्ष्मीवदनेन्दुना न सुखितं यन्नार्दितं वारिधे-
र्वारा यन्न निजेन नाभिसरसीपद्मेन शान्तिं गतम् ।
यच्छेपाहिफणासहस्रमधुरः श्वासैर्न चाश्वासितं
तद्राधाविरहातुरं मुररिपोर्वेल्लद्वपुः पातु वः ॥

परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीकृष्णराजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवैरिसिह्नदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीसीयकदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमदमोघवर्षदेवापराभिधानश्रीमद्वाक्पतिराजदेवपृथ्वीवल्लभश्रीवल्लभनरेन्द्रदेवः कुशली तिणिसपदद्वादशकसंबद्धमहासाधनिकश्रीमहाइकभुक्तसेम्बलपुरग्रामे समुपगतान्समस्तराजपुरुषान्ब्राह्मणोत्तरान्प्रतिवासिपट्टकिलजनपदादींश्च बोधयति—अस्तु वः संविदितम्—यथा ग्रामोऽयमस्माभिः षट्तृं(त्रिं)शसहस्रिकसंवत्सरेऽस्मिन्कार्तिकशुद्धपौर्णमास्यां सोमग्रहणपर्वणि श्रीभगवत्पुरावासितैरस्माभिर्महासाधनिकश्रीमहाइकपत्नीआसिनीप्रार्थनयोपरिलिखितग्रामः स्वसीमा तृणयूतिगोचरपर्यन्तः सहिरण्याभोगभागः सोपरिकरः सर्वादायसमेतः श्रीमदुज्जयिन्यां भट्टारिकाश्रीमद्भट्टेश्वरीदेव्यै स्नानविलेपनपुष्पगन्धधूपनैवेद्यप्रेक्षणिकादिनिमित्तं च, तथा खण्डस्फुटितदेवगृहजगतीसमारचनार्थं च मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धयेऽदृष्टफलमङ्गीकृत्या-चन्द्रार्कार्णवक्षितिसमकालं परया भक्त्या शासनेनोदकपूर्वकं प्रतिपादित

इति मत्वा तन्निवासिपट्टकिलजनपदैर्यथादीयमानभागभोगः करहिरण्यादिकं सर्वमाज्ञाश्रवणविधेयैर्भूत्वा सर्वथा सर्वमस्याः समुपनेतव्यम्। सामान्यं चैतत्पुण्यफलं बुद्ध्वास्मद्वंशजैरन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मदायोऽयमनुमन्तव्यः पालनीयश्च। उक्तं च—

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत॥
अस्मत्कुलक्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्यनुमोदनीयम्।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया दानं फलं परयशःप्रतिपालनं च॥
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः॥

इति॥ संवत् १०३६ चैत्र वदि ९। गुणपुराविसितै(वासिते) श्रीमन्महाविजयस्कन्धावारे स्वयमाज्ञादायकश्चात्र श्रीरुद्रादित्यः। स्वहस्तोऽयं श्रीवाक्पतिराजदेवस्य॥

(इण्डियन् आण्टिक्वरी १४।१६०)

---

# (५८)

## श्रीशिवसिंहदेवनृपतीनां शासनपत्रम्।

श्रीगजरथपुरात्समस्तप्रक्रियाविराजमानश्रीमद्रामेश्वरीवरलब्धप्रसादभवानीभक्तिभावनापरायणरूपनरायणमहाराजाधिराजश्रीमच्छिवसिंहदेवपादाः समरविजयिनो जरैलतप्पायां विसपीग्रामवास्तव्यसकललोकान्भूकर्षकांश्च समादिशन्ति। ज्ञातमस्तु भवताम्—ग्रामोऽयमस्माभिः सप्रक्रियाभिनवजयदेवमहापण्डितठक्कुरश्रीविद्यापतिभ्यः शासनीकृत्य प्रदत्तः। ग्रामकस्था यूय-

मेतेषां वचनकरी(रा) भूकर्षणादिकर्म करिष्यथेति ॥ ल सं २८३ श्रावण-सुदि ७ गुरौ।

श्लोकास्तु—

अब्दे लक्ष्मणसेनभूपतिमते वह्निग्रहद्व्यङ्किते
मासे श्रावणसंज्ञके मुनितिथौ पक्षेऽवलक्षे गुरौ।
वाग्वत्याः सरितस्तटे गजरथेत्याख्याप्रसिद्धे पुरे
दित्सोत्साहविवृद्धि(द्ध)बाहुपुलकः सभ्याय मध्ये शुभम् ॥
प्रज्ञावान्प्रचरोर्वरं पृथुतराभोगं नदीमातृकं
सारण्यं ससरोवरं च विसपीनामानमासीमतः।
श्रीविद्यापतिशर्मणे सुकवये पुत्रादिभिर्भुञ्जतां(ते)
स श्रीमाञ्शिवसिंहदेवनृपतिर्ग्रामं ददे शासनम् ॥
येन साहसमयेन सत्रिणा तुङ्गवाहवरपृष्ठवर्तिना।
अश्वपत्तिवलयोर्बलं जितं गज्जनाधिपतिगौडभूभुजाम् ॥
रौप्यकुम्भ इव कज्जलरेखा श्वेतपद्म इव शैवलवल्ली।
यस्य कीर्तिनवकेतककान्त्या म्लानिमेति विजितो हरिणाङ्कः ॥
द्विषन्नृपतिवाहिनीरुधिरवाहिनीकोटिभिः
प्रतापतरुवृद्धये समरमेदिनी प्लाविता।
समस्तहरिदङ्गनाचिकुरपाशवासक्षमं
सितप्रसरपाण्डुरं जगति येन लब्धं यशः ॥
मतङ्गजरथप्रदः कनकदानकल्पद्रुम-
स्तुलापुरुषमद्भुतं निजधनैः पिता दापितः।
सुखानि च महात्मना जगति येन भूमीभुजा
परापरपयोनिधिः प्रथममैत्रपात्रं सदा ॥
नरपतिकुलमान्यः कर्णशिक्षावदान्यः
परिचितपरमार्थो दानतुष्टार्थिसार्थः।
निजचरितपवित्रो देवसिंहस्य पुत्रः
स जयति शिवसिंहो वैरिनागेन्द्रसिंहः ॥

ग्रामे गृह्णन्त्यमुष्मिन्किमपि नृपतयो हिन्दवोऽन्ये तुरुष्का
　गोकोलं स्वात्ममांसैः सहितमनुदिनं भुञ्जते ते स्वधर्मम् ।
ये चैनं ग्रामरत्नं नृपकररहितं पालयन्ति प्रतापै-
　स्तेषां सत्कीर्तिगाथा दिशि दिशि सुचिरं गीयतां बन्दिवृन्दैः ॥
सन् ८०७ संवत् १४५९ शाके १३२१ । शुभमस्तु ।

(इण्डियन् आण्टिक्वेरी १४ ।)

---

# (५९)

## यादववंशभूषणरामभूपतिदानपत्रम् ।

ॐ नमो वराहाय ॥

जयत्याविष्कृतं विष्णोर्वाराहं क्षोभितार्णवम् ।
दक्षिणोन्नतदंष्ट्राग्रविश्रान्तभुवनं वपुः ॥
विष्णोर्नाभीकमलकुहरादाविरासीद्विरिञ्चि-
　र्न्यञ्चन्मौलिस्खलितकुसुमं वन्दितो देवदैत्यैः ।
तस्मादत्रिः समजनि जगज्जातनैत्रप्रकाश-
　श्चन्द्रस्तस्मादभवदमृतोद्गारशृङ्गारिताशः ॥
वंशे तस्य पुरूरवाः समभवद्यच्चापमापद्गतो
　देवानामधिपः स्मरत्यविरतं व्यालुप्तवज्रग्रहः ।
आब्रह्माण्डमखण्डताण्डवरथप्रस्थानलीलां वह-
　न्यश्चैको बुभुजे भुजेन विजितामुर्वीं तथैवोर्वशीम् ॥
तस्मिन्नेव ययातिराविरभवद्भूमण्डलाखण्डलः
　सर्वैः स्वर्वनितानितान्तसुभगप्रोद्गीतदोर्विक्रमः ।
यस्याद्यापि मखाहिताहुतिशतप्रोद्दानभूमोत्करै-
　राकीर्णं परितः स्फुरत्यविरतं तापिच्छनीलं नभः ॥
　तस्मादजायत यदुर्यदुपग्रहेण
　　वंशस्ततः परमगाज्जगतीप्रतिष्ठाम् ।

तस्मिन्नथायमभवत्प्रभवः प्रजानां
लीलामयं वपुरमन्दवलं दधानः ॥
यदोस्तस्मिन्वंशे समजनि स निर्वापितरिपु-
प्रतापस्तापच्छिन्निखिलजगतो राजनृपतिः ।
यदीयप्रोदञ्चच्चरणनखरत्नांशुजलधौ
निमज्जन्तश्चित्रं जगदुपरि वृत्तिप्रणयिनः ॥
खेलत्खड्गावतंसो रणशिरसि वशीकृत्य कर्णाटराजं
यः पाण्ड्यं दण्डयित्वा न्यधित जलनिधेः स्तम्भमभ्यर्णभूमौ ।
यद्बाणव्रातपातैर्न समरमभजज्जर्जरो गुर्जरेन्द्रः
स श्रीमानाविरासीत्तुहिनकरकुले **सिङ्घणः** साहसाङ्कः ॥
तस्मादभूत्प्रभुरशेषमहीपतीनां
श्रीमल्लुगिर्विजयकार्मणकार्मुकश्रीः ।
यस्य प्रतापतरणौ तरणे तरूणां
छायेव दैर्घ्यमजहादरिभूभृतां श्रीः ॥
यस्मिन्भ्रूभङ्गभीमे चलति वसुमतीमण्डलं चण्डभानो-
र्बिम्बं शैलेन्द्रसंधेस्त्रिभिरभित इमे संभ्रियन्ते स सर्वे ।
वल्गद्भिर्वाजिवृन्दैस्तुरगखुरहतैः पांसुभिर्भीतिभित्तैः
क्षोणीन्द्रः स प्रवीरस्तदनु समभवद्**भिल्लमः** सार्वभौमः ॥
यः संख्ये त्रिकलिङ्गराजमवधद्विद्वेषिसीमन्तिनी-
नेत्राम्भःप्रसरत्प्रगल्भलहरीनिर्वाणवैरानलः ।
यश्चैतस्य समस्तराज्यमहरन्मत्तेभकुम्भस्थली-
कूजत्षट्पदगीतवैभवभरं जातस्ततो **जैतुगिः** ॥
कारागारात्समानीय करुणावरुणालयः ।
प्रियंवदास्यमकरोत्क्षितेर्गणपतिं पतिम् ॥
हम्मीरतिमिरतरणिः सरणिर्धर्मस्य संक्रमः कीर्तेः ।
तस्मादयमजनि श्रीसिङ्घणदेवभूपालः ॥

बल्लालो विजितः पराभवभुवं संभावितोऽन्ध्राधिपः
　कक्कल्लो दलितः क्षणेन गलितो भम्मागिरेरीश्वरः।
दुर्गाग्रे विनिबाध्य भोजनृपतिं न्यस्तोऽर्जुनो निर्जित-
　स्तेनेति प्रति[प]द्य के भुवि भयं भेजुर्न भूमीभुजः॥
कृष्यन्ते यदुराजरत्न भवता वक्षांसि विद्वेषिणा-
　मुप्यन्ते समरस्थलीषु करिणां मुक्तावलिश्रेणयः।
वर्षन्ति स्तनमण्डलेषु तरुणीनेत्राणि वाष्पोत्करै-
　रुद्भेदो भुवनत्रयेऽपि यशसामाश्चर्यमुज्जृम्भते॥
　　तस्मादजायत जगत्रयगीयमान-
　　　प्रौढप्रतापतपनोदयदुर्निवारः।
　　श्रीजैतुगिर्वसुमतीवलयाधिनाथै-
　　　श्चूडामणिप्रकरसंकरचुम्बिताङ्घ्रिः॥
तस्मात्कृष्ण इति प्रसिद्धचरितः **श्रीरायनारायणो**
　जातः कार्तिकचन्द्रकान्तिजयिनां कीर्तिं चिरं नर्तयन्।
गर्जद्गुर्जरवीरशोणितसरित्सङ्गत्वरे श्रीपतिः
　पाथोधौ सघृणो यदीयहृदये निर्दूषणे निद्रितः॥
आदाय द्विषतां करङ्कनिवहान्कृत्वा हलादीनि तैः
　कृष्टे कृष्णमहीभृता कृषिमता क्षेत्रे महीमण्डले।
येनारातिवधूविलोचनगलत्सान्द्राञ्जनैरम्बुभिः
　क्लिन्ने शौर्यसुबीजमुप्तमभितः प्राप्ता यशोराशयः॥
सत्त्वं यद्धनवाहने रविसुते वैरोचनं श्रीशिबौ
　दानं यच्च दधीचिनाम्नि सकलं संगृह्य सृष्टोऽद्भुतः।
नूनं कृष्णघटोद्भवोऽखिलकृता दारिद्र्यपाथोनिधिः
　पीतस्त्यागकरप्रवृद्धचुलुकेनोद्धृत्य येनार्थिनाम्॥
　　तस्यानुजो निजभुजार्पितभूमिभारः
　　　स्वच्छन्दचारमुदितोरगसार्वभौमः।

यो वीसलं समरकौतुकिनां सुराणा-
मग्रे समूलविभवं दलयांचकार ॥
तस्मादभूद्रामनभूमिपालः समस्तमाहेश्वरमौलिरत्नम् ।
अलिख्यतोच्चैः खुरलेखनीभिर्यद्वाजिभिर्दिक्षु जयप्रशस्तिः ॥
प्रसह्य तस्मादपहृत्य भुङ्क्ते कृष्णानुजः स्वामवनिं स रामः ।
यस्यासिरुज्जृम्भितकैरवाभिर्दिशो यशोभिः सुरभीकरोति ॥
महामाहेश्वरः श्रीमान्रामः क्षोणीभृतां गुरुः ।
यशःक्षीरेण यः शंभोर्मूर्तीरष्टाभिषिञ्चति ॥
यत्पुण्यगिरिगर्भोत्थयशोमारुतमण्डली ।
ब्रह्माण्डपरमाणूनामभवद्बहुलं रजः ॥
प्राप्तः श्रीरामभूपोऽपसरत रिपवः संगरादाशु हित्वा
राज्यं सप्ताङ्गमेतत्पिबत भुवि जलं शीतलं क्वापि याताः ।
नो चेदस्यासिधाराविदलितवपुषस्तत्क्षणादेव दिव्यं
देहं प्राप्यामरस्त्रीजननयननवप्रेमसंपत्सुधां वा ॥
आसन्सन्ति च वंशजाः कति कति प्राज्ञा भविष्यन्ति च
स्फीताः शस्त्रभृतः कलासु कुशला धूर्ता विटाः कर्मठाः ।
वर्ण्योऽयं पुनरेव रामनृपतिः प्रत्यर्थिनामर्थिनां
यो न क्वापि पराङ्मुखः क्षितितलालंकारचूडामणिः ॥
वाक्प्रपञ्चप्रवहणै रिक्तं यद्गुणसंगरम् ।
अपारयन्त नापारं तरीतुं कविनाविकाः ॥

स खल्वेवंविधगुणगणालंकृततनुरनारतद्रविणवितरणकृतार्थीकृतार्थिसार्थः सकलपरिपन्थिपार्थिवान्विनिर्जित्य निजकुलक्रमागतसांराज्यपदमुद्धृत्य दधानो रायनारायणो रामनृपतिः सेउनदेशालंकारभूतं गोदावर्युत्तरकूलस्थितं वादाथनग्रामं पाटारपिम्पलग्रामवैद्यघोघरग्रामवैद्यद्वयसहितमग्रहारीकृत्य निधिनिक्षेपजलपाषाणशुल्कमौलिकश्रोणदानदण्डकारुकादिसमस्तादायसहितं राजराजपुरुषैरप्यनङ्गुलिनिर्देश्यं प्रविष्टग्रामद्वयसहितं चतुराघाटविशुद्धं भक्तिश्रद्धातिशयहिरण्याक्षतोदकसहितं शके च एकादशसु त्रिनवत्यधिके-

व्यतीतेषु ११९३ वर्तमानप्रजापतिसंवत्सरान्तर्गते माघशुद्धद्वादश्यां बुधे आत्मनः श्रीशार्ङ्गपाणिप्रीत्यर्थं नानागोत्रेभ्यः सप्तपञ्चाशत्संख्यकेभ्यो ब्राह्मणेभ्यः प्रादात् ॥ ते च ब्राह्मणा नामतो लिख्यन्ते। तत्र बह्वृचाः—वाशिष्ठगोत्रगोविन्दसुतविष्णु–मुद्गलगोत्रपद्मनाभसुतजानू–वाशिष्ठगोत्रदामोदरसुतबलदेव–विष्णुवृद्धगोत्रदामोदरसुतविष्णु–भारद्वाजगोत्रबलदेवसुतजानू–कौण्डिन्यगोत्रधरणूसुतप्रभाकर–विश्वामित्रगोत्रगोविन्दसुतमाइआ–गर्गगोत्रनागदेवसुतवामन–हरितगोत्रआपदेवसुतश्रीधर–गार्ग्यगोत्रराघवसुतकेशव–कौण्डिन्यगोत्रगौतमसुतमहादेव–जामदग्न्यवत्सगोत्रमाम्यदेवसुतनरसिंह–हरितगोत्रअनन्तसुतसारङ्ग–भारद्वाजगोत्रविनायकसुतआईदेव–भारद्वाजगोत्रवामदेवसुतकृष्ण–कौण्डिन्यगोत्रईश्वरसुतकृष्ण–कौण्डिन्यगोत्रकृष्णसुतपुरुषो–कौण्डिन्यगोत्रकृष्णसुतराम–भरद्वाजगोत्रमल्लिनाथसुतभानु–हरितगोत्रहरिदेवसुतलक्ष्मीधर–वाशिष्ठगोत्रगोविन्दसुतनागदेव–वाशिष्ठगोत्रगोविन्दसुतकेशव–विश्वामित्रगोत्रश्रीपतिसुतएल्हुगि–कौण्डिन्यगोत्रनागदेवसुतईश्वर–गौतमगोत्रधनेश्वरसुतवामन–भरद्वाजगोत्रगदाधरसुतब्रह्मदेव–गौतमगोत्रदामोदरसुतधनेश्वर–मुद्गलगोत्रमाधवसुतगोविन्द–भरद्वाजगोत्रनारायणसुतगङ्गाधर–भरद्वाजगोत्रगङ्गाधरसुतजगन्नाथ ॥ अथ तैत्तिरीयाः—कौण्डिन्यगोत्रसोमनाथसुतपद्मनाभभट्ट–कौण्डिन्यगोत्रपद्मनाभसुतनरसिंह–कौण्डिन्यगोत्रपद्मनाभसुतसोमनाथ–कौण्डिन्यगोत्रपद्मनाभसुतसारङ्ग–कौण्डिन्यगोत्रपद्मनाभसुतगणेश्वर–कौण्डिन्यगोत्रपद्मनाभसुतहरिहर–कौण्डिन्यगोत्रपद्मनाभसुतत्रिविक्रम–काश्यपगोत्रमहादेवसुतकूचिष्ठ(?)–गार्ग्यगोत्रदेवन्नसुतदिवाकर–कौशिकगोत्रमल्लिदेवसुतविष्णु–वाध्र्यश्वगोत्रनामदेवसुतविष्णु–आत्रेयगोत्ररामसुतसारङ्ग–काश्यपगोत्रकामदेवसुतसोमनाथ–गौतमगोत्रविष्णुसुतचौवेरि–गार्ग्यगोत्रनारायणसुतविष्णु–कौण्डिन्यगोत्रसारङ्गभट्टसुतऋषिदेव–देवरातगोत्रतीलूआपसुतत्राईदेव–कौण्डिन्यगोत्रनागदेवसुतआदित्य–कौण्डिन्यगोत्रनरसिंहसुतविष्णु–देवरातगोत्रनारायणसुतबापदेव–देवरातगोत्रबापदेवसुतराम–देवरातगोत्रनारायणसुतविष्णु–भरद्वाजगोत्रजनार्दनसुतकृष्ण–देवरातगोत्रनारायणसुतअनन्त ॥ अथ बह्वृचो

भरद्वाजगोत्रविष्णुसुतरामपण्डित-भरद्वाजगोत्ररामपण्डितसुतमैंदेवपण्डित ॥ एवमङ्कतः ९७ ॥ अथाघाटाः—पूर्वतः-वाहगाँव । आग्नेये-नेउरगाँव । दक्षिणे-देड़गाँव, तथा गङ्गा । पश्चिमे-गङ्गा, तथा खाटिगाँव, तथा आलुएँगाँव, तथा नागमथनम् । वायवे-जाँटेगाँव । उत्तरे-पानिव । ईशाने-वेदखल । एवं सर्वाघाटविशुद्धाः सप्रविष्टखेटकसहितास्त्रयो ग्रामाः ॥ अत्र चैवं समयः । राजसेवकानां वसतिदण्डप्रयाणदण्डौ नस्तः ॥

आचन्द्रार्कमिदं भोज्यमेभिरेषां च वंशजैः ।
वसद्भिरेव भोक्तव्यं न चादेयं कदाचन ॥

पण्याङ्गनानां सदनं न देयं द्यूतप्रचारोऽपि निवारणीयः ।
शस्त्रादिकं चापि न धारणीयं सत्कर्मनिष्ठैर्भवितव्यमेभिः ॥

अस्य धर्मस्य संरक्षणे फलमिति स्माहुः प्राञ्चो महर्षयः—

गण्यन्ते पांसवो भूमेर्गण्यन्ते वृष्टिबिन्दवः ।
न गण्यते विधात्रापि धर्मसंरक्षणे फलम् ॥
बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

अत एवाह रामभद्रः—

सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ॥

मद्वंशजाः परमहीपतिवंशजा वा
पापादपेतमनसो भुवि भाविभूपाः ।
ये पालयन्ति मम धर्ममिमं समग्रं
तेभ्यो मया विरचितोऽञ्जलिरेष मूर्ध्नि ॥

नास्ति भूमिसमं दानं नास्ति राज्ञः समो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥
अग्निष्टोमप्रभृतिभिरिष्ट्वा यज्ञैः सदक्षिणैः ।
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥

अपहरतः समर्थस्याप्युपेक्षकस्येव विपरीतफलमाहुः—

गामेकां रत्तिकामेकां भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥
दाता दशानुगृह्णाति दशाहन्ति तथाक्षिपन् ।
पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति ॥
न ददाति प्रतिश्रुत्य दत्तां वा हरते तु यः ।
तौ च द्वौ वारुणैः पाशैस्तप्येते मृत्युशासनात् ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरशायिनः ।
कृष्णसर्पाः प्रजायन्ते ब्रह्मभूम्यपहारकाः ॥
पतन्त्यश्रूणि रुदतां दीनानामवसीदताम् ।
ब्राह्मणानां ह(हृ)ते क्षेत्रे हन्ति त्रैपुरुषं कुलम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिः ॥

॥ ७ ॥ लिखितं पण्डितधनेश्वरेण ॥ ७ ॥
मङ्गलं महाश्रीः ॥ ॐ शिवमस्तु ॥ ७ ॥

(इण्डियन् आण्टिक्केरी १४।३१५–३१९)

---

# ( ६० )

## राज्ञः श्रीशिवसिंहदेवस्य दानपत्रम् ।

श्रीगजरथपुरात्समस्तप्रक्रियाविराजमान–श्रीमद्रामेश्वरीवरलब्धप्रसाद–भवानीभक्तिभावनापरायण–रूपन(ना)रायण–महाराजाधिराज–श्रीमच्छिवसिंहदेवपादाः समरविजयिनो जरैलतप्पायां विसपीग्रामवास्तव्यसकललोकान्भूकर्षकांश्च समादिशन्ति । ज्ञातमस्तु भवताम् । ग्रामोऽयमस्माभिः सप्रक्रियाभिनवजयदेव[1]–महापण्डित–ठक्कुर[2]–श्रीविद्यापतिभ्यः शासनीकृत्य प्र-

---

१. जयदेवो गीतगोविन्दकृत्. २. मैथिलप्रसिद्धमुपनाम.

दत्तः। ग्रामकस्था यूयमेतेषां वचनकरी भूकर्षकादिकर्म करिष्यथेति ॥
ले सं २८३ श्रावणशुदि ७ गुरौ ॥

श्लोकास्तु—

अब्दे लक्ष्मणसेनभूपतिमते वह्निग्रहद्व्यङ्किते
मासे श्रावणसंज्ञके मुनितिथौ पक्षेऽवलक्षे गुरौ।
वाग्वत्याः सरितस्तटे गजरथेत्याख्याप्रसिद्धे पुरे
दित्सोत्साहविवृद्धिबाहुपुलकः सभ्याय मध्ये शुभम् ॥
प्रज्ञावान्प्रचरोर्वरं पृथुतराभोगं नदीमातृकं
सारण्यं ससरोवरं च बिसपीनामानमासीमतः।
श्रीविद्यापतिशर्मणे सुकवये पुत्रादिभिर्भुञ्जतां
स श्रीमाञ्शिवसिंहदेवनृपतिर्ग्रामं ददे शासनम् ॥
येन साहसमयेन सत्रिणा तुङ्गवाहवरपृष्ठवर्तिना।
अश्वपत्तिबलयोर्बलं निजं गज्जनाधिपतिगौडभूभुजाम् ॥
रौप्यकुम्भ इव कज्जलरेखा श्वेतपद्म इव शैवलवल्ली।
यस्य कीर्तिनवकेतककान्त्या म्लानिमेति विजितो हरिणाङ्कः ॥
द्विषन्नृपतिवाहिनीरुधिरवाहिनीकोटिभिः
प्रतापतरुवृद्धये समरमेदिनी प्लाविता।
समस्तहरिदङ्गनाचिकुरपाशवासक्षमं
सितप्रसरपाण्डुरं जगति येन लब्धं यशः ॥
मतङ्गजरथप्रदः कनकदानकल्पद्रुम-
स्तुलापुरुषमद्भुतं निजधनैः पिता दापितः।
सुखानि च महात्मना जगति येन भूमीभुजा
परापरपयोनिधिः प्रथममैत्रपात्रं सदा ॥

---

१. लक्ष्मणसेनसंवत्. २. अयमेव लक्ष्मणसेनभूपतिः 'सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च। सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥ ३९ ॥' इत्यार्यया गोवर्धनाचार्यैर्वर्णितः. अनेन खिस्ताब्दस्यैकादशशतकसमाप्तिपर्यन्तं वङ्गदेशोऽपायीति केचिदैतिहासिकाः. एतल्लेखखिस्ताब्दसंख्या तु गजाङ्काग्नीन्दु(१३९८)मिता भवति.

नरपतिकुलमान्यः कर्णशिक्षावदान्यः
परिचितपरमार्थो दानतुष्टार्थिसार्थः ।
निजचरितपवित्रो देवसिंहस्य पुत्रः
स जयति शिवसिंहो वैरिनागेन्द्रसिंहः ॥
ग्रामे गृह्णन्त्यमुष्मिन्किमपि नृपतयो हिन्दवोऽन्ये तुरुष्का
गोकोलं स्वात्मसंगैः सहितमनुदिनं भुञ्जते ते स्वधर्मम् ।
ये चैनं ग्रामरत्नं नृपकररहितं पालयन्ति प्रजां-
स्तेषां सत्कीर्तिगाथा दिशि दिशि सुचिरं गीयतां वन्दिवृन्दैः ॥
सन ८०७ संवत(त्) १४५५ शाके १३२१ शुभमस्तु ।

(इण्डियन् आण्टिक्वेरि १४।१९०-१९१)

## ( ६१ )

### वलभीपतेः प्रथमशिलादित्यस्य दानपत्रम् ।

ओं स्वस्ति वलभीतः प्रसभप्रणतामित्राणां मैत्रकाणामतुलबलसंपन्नमण्डलाभोगसंसक्तसंप्रहारशतलब्धप्रतापात्प्रतापोपनतदानमानार्जवोपार्जितानुरागादनुरक्तमौलभृतश्रेणीबलावाप्तराज्यश्रियः परममाहेश्वरश्रीभटार्कादव्यवच्छिन्नराजवंशान्मातापितृचरणारविन्दप्रणतिप्रविधौताशेषकल्मषः शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणतारातिचूडारत्नप्रभासंसक्तपादनखरश्मिसंहतिः सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनान्वर्थराजशब्दः रूपकान्तिस्थैर्यगाम्भीर्यबुद्धिसंपद्भिः स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयानः शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफलः प्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदयः पादचारीव सकलभुवनमण्डलाभोगप्रमोदः

---

१. कोलः सूकरः. २. संवत्-शकसंख्ययोर्मध्ये एकतरा संख्याशुद्धा. यदि संवत्संख्या १४५५ एतावती तर्हि शकसंख्या १३२० इयती भवितुमर्हति; यदा च शकसंख्या १३२१ इयती तदा संवत्संख्येयं १४५६ युज्यते.

परममाहेश्वरः श्रीगुहसेनस्तस्य सुतस्तत्पादनखमयूखसंतानविसृजितजाह्नवीजलौघप्रक्षालिताशेषकल्मषः प्रणयिशतसहस्रोपजीव्यमानसंपद्रूपलोभादिवाश्रितः सरभसमाभिगामिकैर्गुणैः सहजशक्तिशिक्षाविशेषविस्मायिताखिलबलधनुर्धरः प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मदायानामपाकर्ता प्रजोपघातकारिणामुपप्लवानां दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य संहताराातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसंप्राप्तविमलपार्थिवश्रीः परममाहेश्वरः श्रीधरसेनस्तस्य सुतस्तत्पादानुध्यातः सकलजगदानन्दनात्यद्भुतगुणसमुदयस्थगितसमग्रदिङ्मण्डलः समरशतविजयशोभासनाथमण्डलाग्रद्युतिभासुरांसपीठोदूढगुरुमनोरथमहाभारः सर्वविद्यापरावरविभागाधिगमविमलमतिरपि सर्वतः सुभाषितलवेनापि सुखोपपादनीयपरितोषः समग्रलोकागाधगाम्भीर्यहृदयोऽपि सुचरितातिशयसुव्यक्तपरमकल्याणस्वभावः खिलीभूतकृतयुगनृपतिपथविशोधनाधिगतोदग्रकीर्तिर्धर्मानुपरोधोज्ज्वलतरीकृतार्थसुखसंपदुपसेवानिरूढधर्मादित्यद्वितीयनामा परममाहेश्वरः श्रीशिलादित्यः कुशली सर्वानेवायुक्तकविनियु·········हत्तरचाटभटकुमारामात्यादीनन्यांश्च यथाभिसंबध्यमानकान्समाज्ञाप[यति]·······[वि]दितं यथा मया मातापित्रोः पुण्याप्यायनायवलभीप्रतिष्ठापितराज्ञीडड्डाकारितविहारनिवासिचतुर्दिगभ्यागतार्यभिक्षुसंघस्य चीवरपिण्डपातशयनासनभैषज्यपरिष्कारार्थं बुद्धानां च भगवतां गन्धधूपपुष्पमाल्यदीपतैलाद्युपयोगार्थं विहारस्य च खण्डस्फुटितप्रतिसंस्काराय········पुष्पानकस्थल्यन्तर्गत उच्चापद्रके कुटुम्बिसूर्यकप्रत्ययक्षेत्रं तथा ········प्रत्ययक्षेत्रं तथा कक्किजग्रामे अधिकप्रत्ययवापि तथा कुम्भारप्रत्ययवापि तथेन्द्राणिपद्रके····रप्रत्ययक्षेत्रं तथा वलभीस्वतलसीम्नि पुष्पवाटिकाकूपकचतुष्टयमेवमयं क्षेत्रत्रयवापिद्वयपुष्पवाटिकाकूपकचतुष्टयसमेतो ग्रामः सोद्रङ्गः सोपरिकरः सवातभूतप्रत्यायः सधान्यहिरण्या देयः सदसापराधः सोत्पद्यमानविष्टिः सर्वराजकीयानामहस्तप्रक्षेपणीयः पूर्वप्रत्तदेवब्रह्मदेयवर्जितो भूमिच्छिद्रन्यायेनाचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनो व्यवच्छित्तिभोग्यो धर्मदायतया प्रतिपादितः। यत उचितया च देवाग्रहारस्थित्या भुज्यमानको न कैश्चित्परिपन्थिनीयः। आगामिभद्रनृपतिभिरप्यस्म-

द्धमजन्यैर्वानिलान्यैश्वर्याण्यस्थिरं मानुष्यं सामान्यं च भूमिदानफलमव-गच्छभिरयमस्मद्वायोऽनुमन्तव्यः पालयितव्यश्चेति ।

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
षष्टिं वर्षसहस्राणि स्वर्गे मोदेत भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

दूतकश्चात्र भट्टादित्ययशाः । लिखितं संधिविग्रहाधिकृतदिविरपतिवत्स-भट्टिना ॥ सं २०० ८०६ ज्येष्ठ व ६॥ स्वहस्तो मम ॥

(इण्डियन् आण्टिक्वेरी १४।२२९-२३०)

---

## (६२)

### श्रीध्रुवराजदेवस्य शासनपत्रम् ।

[१] .............................................

.............................................. ।

ज्ञाता मान्भूदग्रणीर्गुणवतां योऽसौ श्रियो वल्लभो
भोक्तुं स्वर्गफलानि भूरितपसा स्थानं जगामापरम् ॥
येन श्वेतातपत्रप्रहतरविकरव्राततापात्सलीलं
जज्ञे नासीरधूलीधवलितशिरसा वल्लभाख्यः सदाजौ ।
श्रीमद्गोविन्दराजो जितगदहित····स्त्रैणवैधव्यदक्ष-
स्तस्यासीत्सूनुरेकः क्षणरणदलितारातिमत्तेभकुम्भः ॥
तस्यानुजः श्रीध्रुवराजनामा महानुभावोऽप्रहतप्रतापः ।
प्रसाधिताशेषनरेन्द्रचक्रः क्रमेण बालार्कवपुर्बभूव ॥

---

१. श्लोकोऽयं प्रायः प्राचीनलेखमालामुद्रितचतुर्थलेखसमोऽस्ति, अतस्तत्प्रारम्भश्लोका अत्रापि स्युः.

रक्षता येन निःशेषं चतुरम्भोधिसंयुतम्।
राज्यं धर्मेण लोकानां कृता हृष्टिः परा हृदि॥

तस्यात्मजो जगति सत्प्रथितोरुकीर्ति-
गोविन्दराज इति गोत्रललामभूतः।
त्यागी पराक्रमधनः प्रकटप्रताप-
संतापिताहितजनो जनवल्लभोऽभूत्॥

एकोऽनेकनरेन्द्रवृन्दसहितान्यस्तान्समस्तानपि
प्रोत्खातासिलताप्रहारविधुरान्बद्ध्वा महासंयुगे।
लक्ष्मीमप्यचलां चकार विलसत्सच्चामरग्राहिणीं
संसीदद्गुरुविप्रसज्जनसुहृद्बन्धूपभोग्यां भुवि॥

तत्पुत्रेऽत्र गते नाकमाकम्पितरिपुप्रजे।
श्रीमहाराजशर्वाख्यः ख्यातो राजाभवद्गुणैः॥

राजाभूत्तत्पितृव्यो रिपुभवविभवोद्भूत्यभावैकहेतु-
र्लक्ष्मीवागिन्द्रराजो गुणिनृपनिकरान्तश्चमत्कारकारी।
सङ्गादन्यान्व्युदस्य प्रकटितविनया यं नृपान्सेवमाना
राज्यश्रीरेव चक्रे सकलकविजनोद्गीतकथ्यस्वभावम्॥

श्रीकर्कराज इति रक्षितराज्यभारः
सारः कुलस्य तनयो नयशालिशौर्यः।
तस्याभवद्विभवनन्दितबन्धुसार्थः
पार्थः सदैव धनुषि प्रथमः शुचीनाम्॥

स्वेच्छागृहीतविनयान्दृढसंघभाजः
प्रोद्वृत्तदृप्ततरशुल्किकराष्ट्रकूटान्।
उत्खातखड्गनिजबाहुबलेन जित्वा
योऽमोघवर्षमचिरात्स्वपदे व्यधत्त॥

पुत्रीयतस्तस्य महानुभावः कृती कृतज्ञः कृतवीर्यवीर्यः।
वशीकृताशेषनरेन्द्रवृन्दो बभूव सूनुर्ध्रुवराजनामा॥

चन्द्रो जडो हिमगिरिः स हिमः प्रकृत्या
वातश्चलश्च तपनस्तपनस्वभावः ।
क्षारः पयोधिरिति यः सममस्य नास्ति
येनोपमा निरुपमस्तत एव गीतः ॥
अचिराभोज्ज्वलवपुषि क्षितिसंतापहारिणि द्युम्नम् ।
धारावर्षे वर्षति जलद इव न कः कृतार्थः स्यात् ॥
ब्रह्माण्डमेतत्किमिति प्रजासृजा न मत्प्रमाणेन पुरा विनिर्मितम् ।
एवं विचिन्त्य ध्रुवराजकीर्तिर्विधातुरासीत्सुतरामसूयिनी ॥
तेनेदमनिलविद्युच्चञ्चलमालोक्य जीवितमसारम् ।
क्षितिदानपरमपुण्यः प्रवर्तितो धर्मदायोऽयम् ॥

स च समधिगताशेषमहाशब्दमहासामन्ताधिपतिधारावर्षश्रीध्रुवराजदेवः सर्वानेव यथासंबध्यमानान्राष्ट्रपतिविषयपतिग्रामकूटायुक्तनियुक्ताधिकारिकमहत्तरादीन्समनुदर्शयति—अस्तु वः संविदितम् । यथा मया श्रीखेटकबहिः सर्वमङ्गलामत्तावासितेन मातापित्रोरात्मनश्चैहिकामुष्मिकपुण्ययशोभिवृद्धये वदरसिद्धिवास्तव्यतच्चातुर्विद्यसामान्यलावाणसगोत्रवाजिमाध्यंदिनसब्रह्मचारिभट्टमहेश्वरसुतयोगायानन्तरं श्रीगोविन्दराजदेवेन ख्यापितज्यौतिषिकनाम्ने काशहृडदेशान्तर्वर्तिपूसिलाविल्लिनामा ग्रामो यस्याघाटनानि पूर्वतो वेहिच्चाभिधाना नदी वोरीवद्रवकग्रामश्च दक्षिणतश्चतुःसरीनामा ग्रामोपरतन्त्रसिल्लावल्लिनामा उत्तरतो विह्नुचवल्लिनामा ग्रामः, एवमयं चतुराघाटनोपलक्षितः सोद्रङ्गः सपरिकरः सदण्डदशापराधः सभूतपातप्रत्यायसोत्पद्यमानविष्टिकः सधान्यहिरण्यादेयोचाटभटप्रवेश्यः सर्वराजकीयानामहस्तप्रक्षेपणीय आचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनः पुत्रपौत्रान्वयक्रमोपभोग्यः पूर्वप्रदत्तदेवब्रह्मदायरहितोऽभ्यन्तरसिद्ध्या शकनृपकालातीतसंवत्सरशतेषु सप्तसु सप्तपञ्चाशदधिकेषु कार्तिकशुद्धपञ्चदश्यां महाकार्तिकीपर्वणि स्नात्वाद्योदकातिसर्गेण बलिचरुवैश्वदेवाग्निहोत्रातिथिपञ्चमहायज्ञक्रियोत्सर्पणार्थं प्रतिपादितो यतोऽस्योचितया ब्रह्मदायस्थित्या भुञ्जतो भोजयतः कर्षतः कर्षयतश्च प्रतिदिशतो वा न केनचित्परिपन्थिता कार्या ।

२३८ तथागामिनृपतिभिरस्मद्वंश्यैरन्यैर्वा सामान्यं भूमिदानफलमवेत्य विद्युल्लोलान्यनित्यैश्वर्याणि तृणाग्रलग्नजलबिन्दुचञ्चलं च जीवितमाकलय्य(य्य) स्वदायनिर्विशेषोऽयमस्मद्दायोऽनुमन्तव्यः परिपालयितव्यश्च। यश्चाज्ञानतिमिरपटलावृतमतिराच्छिन्द्यात्, आच्छिद्यमानं वानुमोदेत, स पञ्चभिर्महापातकैरुपपातकैश्च संयुक्तः स्यात्। इति॥ उक्तं च भगवता वेदव्यासेन व्यासेन—

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः।
कृष्णाहयो हि जायन्ते भूमिदायं हरन्ति ये॥
अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः।
लोकत्रयं तेन भवेद्धि दत्तं यः काञ्चनं गां च महीं च दद्यात्॥
बहुकि(भि)र्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत॥
स्वदत्तां परदत्तां वा यत्नाद्रक्ष नराधिप।
महीं महिमतां श्रेष्ठ दानाच्छ्रेयोनुपालनम्॥
इति कमलदलाम्बुबिन्दुलोलां
श्रियमनुचिन्त्य मनुष्यजीवितं च।
अतिविमलमनोभिरात्मनीनै-
र्नहि पुरुषैः परकीर्तयो विलोप्याः॥ इति॥

रा

स

दूतकोऽत्र श्रीदेवराजः। लिखितं च श्रीदुर्गभटसूनुना सांधिविग्रहिकश्रीनारायणेन॥ इति मतं मम श्रीध्रुवराजदेवस्य श्रीकर्कराजदेवसुतस्य यदुपरि लिखितम्॥

(इण्डियन् आण्टिक्वेरी १४।१९९-२००)